कालीकुमारग्रन्थमालायाः षष्ठं पुष्पम्

# * दशकुमारशेषः *

( आख्यायिका )



रचयिता

द्वितीयदण्डी श्रीचक्रपाणिदीक्षितः



सम्पादकः

म० म० पं० कालीप्रसादशास्त्री

'संस्कृतम्' पत्रसम्पादकः

मूल्यम् १।।) मुद्रा

प्रकाशनतिथिः

अधिकज्येष्ठशुक्ल चतुर्थी विक्रमाब्दः २०१८

१००० प्रतयः

# निवेदनम्

भवतां हस्ते गुणमन्दारमञ्जरीनामकं गद्यकाव्यं सर्वप्रथम अर्पयतो मे मनसि महान् हर्षः समुत्पद्यते । इदमाख्यायिका । एतन्निर्माता 'श्रीमद्विद्वद्वृन्दपुरन्दरश्रीअम्बेकरङ्गनाथदीक्षितसुकृतिजश्रीबालकृष्णसूरिसूनुरङ्गनाथकविवर' इति । एतन्निर्माणकालो निर्मातुरेव शब्देषु १७८७ तमे वर्षे कार्तिकशुक्लदशमीति, यथा—

> नागखाद्रीन्दुभिर्मितेऽब्दे पुण्ये वर्षे इषे दिशि ।
> पक्षे वलक्षे सम्पूर्णां रङ्गनाथो व्यधादिमाम् ॥

सौराष्ट्रदेशीयगोण्डलस्थितश्रीभुवनेश्वरीपीठहस्तलिखितग्रन्थभण्डारे गुणमन्दारमञ्जर्याः पुस्तकद्वयमासीत । तल्लब्धं तदध्यक्षविद्वत्प्रवरश्रीचरणतीर्थमहाराजानां परमकृपया प्रकाशनाय । अहं तदर्थं कृतज्ञतावनतमस्तकः । एकं पूर्णमेकञ्चापूर्णं पुस्तकम् ।

लघ्वपि गद्यकाव्यमेतत्प्रकृष्टपाण्डित्यपूर्णं पठितुर्मनोहारि, संस्कृतगद्यसंसारस्य शोभामपूर्वां वर्द्धयिष्यतीति मे मतिः । असम्पूर्णप्रकाशनादेतदपि प्रकाशनं सकलविधदोषमवश्यम्, अथापि सुधियो विचार्यैव पठिष्यन्त्येव ।

> सुन्दरीव मनोग्लानिं दूरीकृत्य सतामियम् ।
> सुधापूरीयतां कर्णपूरीभूयाशु मञ्जरी ॥

संस्कृतकार्यालयः
अयोध्या (उ. प्र.)
ज्येष्ठकृष्णसप्तमी २०१८ वि.
७ मई १९६१

विदुषां वशंवदः
महामहोपाध्यायः
प. कालीप्रसादशास्त्री
'संस्कृतम्' पत्रसम्पादकः

---

मुद्रकः—सरस्वतीमुद्रणालयः, अयोध्या (उ० प्र०)

# दशकुमारचरितशेषः

भजे भवनिषेवितं भवनमेकमुच्चैः श्रिया-
-मपारकरुणामयं परमधाम रामाश्रितम् ।
अनन्तचरणं हृदा परिविभाव्य रामायणं
तनोति सुखमक्षयं जगति यस्य पारायणम् ॥

देवीमीडे शर्म्मयीं वाङ्मयीं तां वाच्यातीता शब्दचित्रार्थचित्रा ।
नव्या नव्या याति भव्या कवीनामाविर्भूता सम्पदाना दधाति ॥
व्याकुर्वाणेऽशेषशेषप्रबन्धानास्येनाहुर्यत्र शेषाद्विशेषम् ।
कान्त्या कीर्त्या प्रज्ञया चन्द्रमौलिं तातं वन्दे दीक्षितं चन्द्रमौलिम् ॥

कुशला मतिः किमीयान्निर्माणे दशकुमारशेषस्य ।
अन्तेवासिभिरनिशं प्रेरितबुद्धेर्ममात्र निर्मितिस्सा ॥

अथानन्दपूर्णमानसोऽसमानसोमकान्तिः सुश्रुतविश्रुतचरित्रो मित्रोदयविकाशी जितकाशीकाशीपतिमुखभूपतिमहितो महिता-रुविश्रुतविक्रमः क्रमशः कथितनिजकथं कथञ्चिदाप्तं परमाप्तं मित्रगणमभ्यर्मित्रीणं सहजस्नेहदशा सम्भावयन् भावयन्नन्वेष-णप्रसङ्गसम्पादिताखण्डभूमण्डलप्राज्यराज्यसमधिगतैर्दैवगतेर-चिन्त्यतामचिन्त्यवैभवो भवोद्भवसमोऽसमोन्नतविक्रमैरविभ्रमैः कृतश्रमैर्द्विषदसुहृद्भिर्मान्यमानो मानोन्नतरिपुमर्दनेन विराजमानो राजमानो जयश्रिया श्रिया तुलितनरवाहनो राजवाहनस्तापसी-भूतनिजधात्रीकथितनिजकन्यकाङ्कतलशबरसमाक्षिप्तनिजसहोदर-वृत्तान्तश्रवणदिवसात् पूर्वविज्ञातशवरोहस्तो हस्तोपलब्धिकर्माणं निहतचण्डवर्माणमपहारवर्माणमात्मसहोदरं निश्चितवतोत्थाय ाञ्जलिना समुद्भूतप्रभूतशर्मणाऽद्भुतकर्मणा प्रणम्य उपहार-

वर्मणा व्यज्ञापि । देवदेवेन राजहंसेन राजहंसेन शबरोऽनुनीय सामदानै राजलक्षणोद्भासितशरीरः सुकुमारः कुमारः समानीयापहारवर्मेत्याख्याय यो देव्यै मतिमत्यै वसुमत्यै समर्पितः सोऽयं पितुः प्रेयान् श्रेयान् मम ज्यायान् मतितुलितलम्बोदरः सोदरो जन्ममात्रनिमित्तस्य चिरमलब्धवार्तस्य भृशार्तस्य पितुरपनुदतु शोकसन्तापं यदि देवादेश इति । ततस्तदाकर्ण्यानन्दसङ्गतेन विस्मितेन सस्मितेन तेन बाढमित्यादिष्टस्तमुपहारवर्मा स्ववृत्तान्तश्रवणसञ्जातशर्माणमपहारवर्माणमुभयथा पुरस्कृत्य योऽसौ घने वने द्वारिकादारिकायाः पुष्करिकायाः करादाच्छिद्य घस्मरेण शबरेण चिरमनन्तवर्त्यै पत्न्यै समर्पितोऽभूदभूतपूर्वदर्शनं तदेव वनं दैवादाप्तेन सहाप्तेन भूमण्डलावतंसेन राजहंसेन च राज्ञा शबराज्ञातमनुनीतशबरीतः कुमारोऽयं राजन्य इति विलक्षणैर्लक्षणैर्निश्चित्य समानीयापहारवर्मायमित्यभिधाय विधाय च पुनर्जातकर्म धर्मवत्यै वसुमत्यै समर्पितस्तया चाहमिव राजवाहन निर्विशेषं पोषितो वर्द्धितश्च सोऽयमिति ध्यायन्तं तमेव सुतमितरं पितरं प्रादर्शयत् ।

प्रहारवर्मा तु परमसम्मदोद्भिन्नवर्मा विमलसकलक्ष्मानलनहुषादिराजवर्यसधर्मा तमुपहारवर्माभिहितलाभकर्माणमपहारवर्माणमालोक्य विधिनिर्माणमचिन्त्यवैभवं विचिन्त्य च प्रहर्षकम्पिताभ्यामायताभ्यां भुजाभ्यां गाढमालिङ्ग्य परमसम्मदोद्भूतं प्रभूतमश्रुजलं प्रमार्ज्य विस्फारितनयनः पुनश्चिरं निध्यायामन्दसम्मदपयोधिगूढः प्रतिपत्तिमूढः क्षणमतिष्ठत् ।

ततः काशीभूमिपालेन कामपालेन चम्पेश्वरेण सिंहवर्मणा च सञ्जातशर्मणा परमाभ्युदयवार्तयाभिनन्दितोऽनपोढतनुत्राभ्यां सह पुत्राभ्यां राजवाहनान्तिकमुपतिष्ठासुः प्रहर्षभरेण वार्द्धकेन च स्खलद्गतिर्मर्मापरोधनमित्राख्ययान्तरितोऽयमात्मोपगू-

हनीय इत्यपहारवर्मनिर्दिष्टेन तन्निर्विशेषमाश्लिष्टेन मनोरमचरित्रेण धनमित्रेण सहापहारवर्मणा समवलम्बितोभयभुजो नृत्यन्निव प्रहर्षभरेण जहाराचलितकम्पकरकमलः परमाभ्युदयदर्शनप्रीतमानसेन राजवाहनेन निविश्यतां प्रीतोऽहं महाराजस्येव सपुत्रस्य परमसुहृदो भवतोऽवलोकनेनेति सादरमभिहितः परमासने निषसाद ।

ततः कुलशीलसौन्दर्यैश्वर्यदर्शनप्रीताङ्गराजानुशिष्टेन विनयविशिष्टेन चरितपवित्रेण धनमित्रेणाङ्गराजश्रिया सहापहारवर्मणाऽम्बालिकायाः पाणिग्रहणाय विज्ञापितो राजवाहनमुखमुदीक्षाञ्चक्रे ।

राजवाहनस्तु काशीपतिमैथिलाभ्यां समं संमन्त्र्य गणकालापृच्छय त्र्यहादूर्ध्वं परिणयविधिं व्यवस्थाप्यादिश्य च धनमित्रं शिविरनिमाणाय शङ्करमौलिमालतीमालां शालां चतुर्वर्गस्य भागीरथीं :—

"गङ्गे सति तव सङ्गे कृतभवभङ्गे विषादिनोऽपि सुखम् ।
भवति भवेन विषाशनखिन्नेनातः शिरसि धृता"

इत्यभिनन्द्य सिस्नासुरुत्तस्थौ । स्नातं कृतनित्यक्रियं च तं सह काशीपतिमैथिलाभ्यामङ्गराजो गजतुरगकाञ्चनवसनादिना महार्हेण राजार्हेण हर्षकरेण महतोपकरणेन सविनयमानर्च ।

अथार्चितः कृताशनविधिर्निधिपतिसमः सह सुहृद्भिर्मरीचिमुनिदर्शनाय प्रातिष्ठत । उपेत्य चोपाश्रमं श्रमं विनीय विसृष्टेतरपरिजनो जनोपगीतो मन्दपवनावधूतलोलकिसलयकरेण मुनिभयान्मन्दमाह्वयत इव कस्यचिच्चूतपोतकस्य प्रच्छायशीतले तले निषण्णं विधिलिखितगुरुपुण्याक्षरपंक्तिभिरिव मुनिमनोविचिकित्सापनोदनाय विभूताभिस्त्रिपुण्ड्ररेखाभिः समुद्भासितललाट-

भागं कामगञ्जरीवञ्चनवचनाकर्णनसमुद्भूतप्रभूतदुरितक्षयाय रुद्राक्षकुण्डलमिषेणावलम्बितशिवसूक्तजपमालाभ्यामिव कर्णाभ्यां भासमानं काममञ्जरीसमालिङ्गनप्रायश्चित्ताय जटाधरेणेव सलोमकेनोरसा विराजमानं काममञ्जरीसंसर्गसन्तापैरिव चान्द्रायणादिव्रतैः कृशीकृतशरीरं काममञ्जर्येवाविद्यया परित्यक्तं काममञ्जर्या इवापातरमणीयान्मान्यायाः प्रपञ्चानाकलयन्तं काममञ्जरीस्नेहमिव संसारमनित्यमामनन्तं पुनः काममञ्जरीसंसर्गभयेनेव परितोऽवरुध्य नियमितेन्द्रियमविद्यया सामर्षयेव मोहान्धकूपपातितम् पित्रेव विवेकेन शमदमोपशमैः परमगुणैः समुद्धृतं वियोगमसहमानया जनन्येव विद्यया गाढमालिङ्गितं काममञ्जरीरागेण समं तपोनिर्दग्धषड्वर्गं कामकारागारविनिर्मुक्त इति संहर्षमुपागतैः पूर्वसुहृद्भिर्दयादाक्षिण्यसौजन्यवितर्कैः शिष्यैरिव समुपास्यमानं काममञ्जरीकुचस्पर्शपातकपरिजिहीर्षयेवोर्ध्वमुखं तपस्यद्भ्यामुत्तानाभ्यां कराभ्यां समुद्भासितोत्सङ्गं काममञ्जरीचुम्बनदुरितक्षयाय जपोल्लसद्दशनदीधितिगङ्गाजलधाराभिः स्नपयन्तमिवाधरं प्रत्यागतविज्ञानसुहृदालिङ्गनायेव समुच्छ्वासितवक्षसं सच्चिदानन्दघनावलोकनानन्दजनितविमलशीतलनयनसलिलैः प्रशमयन्तमिव काममञ्जरीसरागावलोकनायातसंतापं नयनयोः पुनरहमशक्यश्चालयितुं त्वयेति निवेदयन्तमिव काममञ्जरीशरीरनिश्चलतया व्याघ्राजिनासनपरिग्रहेण भीषयन्तमिव काममञ्जरीसंसर्गजनितसंस्कारविविधविकारमयरुरुप्रषतान् संप्रज्ञातसमाधिनिष्ठं कालत्रयज्ञानभासमानमानससमसमानमन्त्रैः धर्ममिव धरातलावतीर्णमाधारं सर्वविद्यानामेकायतनं शुभकर्मणां मुनिमवलोक्य किञ्चिदिव स्थित्वोपरतसमाधिमाधित्यक्तमव्यक्तदर्शनप्रसन्नमानसं निरस्तानसं तं दूरत एव सह सुहृद्भिः प्रणनाम ।

मुनिस्तु समाश्वास्य सप्रणयमनामयं चापृच्छ्य पूर्वपरिचयाधिगतविश्रम्भेणापहारवर्मणा समुपनीते कुशासने समुपवेश्य च समित्रं मित्रमतिथिमिव तमुपचचार। अथागमनकारणमुत्सया किञ्चिदिव विवक्षुमेन काचिद्धमध्वजिनी विनीतवेषाऽशेषाधीतकपटपाटवा चाटवाम्भोधिवीचीनीचीनीचीकृतान्या कात्यायन्यमुमुईची समीचीनभावा सती सतीभावं प्रदर्शयन्ती निवेदयन्ती निजविकलभावं पर्यश्रुमुखी सम्मुखीभूयाभिवादये भगवन्तमिति वदन्ती तपस्तेजोऽवलोकक्षुभितप्राणं प्राणंसीत। मुनिस्तु तामवलोक्य किञ्चिदिव विहस्याब्रवीत्। अयि मुग्धे! स्वाविनयफलमनुभवन्ती विज्ञाऽपि किमिदानीं विषीदसीति केयमस्याश्च किमशर्म किमशर्मकारणं च कर्म कथयेति तदुदन्तश्रवणकौतुकिना सस्मिताक्षिविक्षेपलब्धराजवाहनादिसम्मतिना प्राञ्जलिनाऽपहारवर्मणा पृष्टो मुनिरभाषत। यद्यपि भवदातिथ्योपचारव्यापृतस्येदमननुकूलं दोषतया चाप्रुण्यमूलं सम्यक् च दोषकर्तुः श्रवणशूलमित्यनुचितं तथापि पुनरेवंविध–विनयनिवृत्तिहेतुतयापदेशरूपमिति धर्मानुकूलमिति मनसि कृत्य कृत्यमस्याः समस्तं सहोत्पत्त्या ससस्यया प्रोच्यते-श्रूयताम्।

इयं खलु मन्त्रगरवासिनो भद्रसेनस्यार्थपतेस्तनया श्रमणानाम कामप्रवणभावादेषा सक्ताचारविशेषा वेषात् कुमारश्रमणा सती देशे देशे विहितभ्रमणा मगधेषु भूरिकालभूतविश्रमणाभूत तत्र च मदनसङ्कपुरे सुरेशसदनसमसदन सदनेहितपरसकलजन धनेप्सयातियत्तस्य कुबेरदत्तस्यार्यस्य वधूमवधूतपरपुरुषसंसर्गां रूपवतीं शीलवतीं नाम कामयमानेनामानधनेन मानधनेन नाम्ना साम्ना समाहूय हर्षसाधनेन धनेन कार्यसाधननिदानेन वसनाशनदानेन च पालिता लालिता चाटुशतैस्तच्छीलपातनाय यतमानाऽयतमाना तद्विषये तपस्विवेषवती विनयवती किल भिक्षा-

टनमिषेण प्रतिगृहं विचरन्ती विहरन्ती यदृच्छया पुष्पाक्षतरोचनाः किरन्ती वितरन्ती सौभाग्यं जातिस्मरत्वमभिनयन्ती निवेदयन्ती सर्वज्ञतां चित्राः कथाः कथयन्ती वशयन्ती ललनाजनं सिद्धिं दर्शयन्ती रचयन्ती प्रज्ञजालं पूज्यमाना प्रमदाभिरेकदा चिरयति प्रोषिते पत्यौ रहः समुपवेश्यासने विनयवत्या शीलवत्या प्रियवृत्तान्तमापृष्टा किञ्चिदिव ध्यात्वा विहस्याब्रवीत्।

अयि वत्से! पतिस्तव कुशली सलीलमास्ते काश्यास्तीरे किन्तु लब्धद्विगुणलाभोऽपि स कितवः सहैकया कयाचिद् गणिकया बद्धस्नेहस्तत्रैव व्यवहरन् संहरन्नितो मनो मनोजवशो विलम्बते। वत्सेदमसाम्प्रतम्। अहो सत्योऽयं स्त्रीजनप्रवादः शपथशतं कुर्वाणोऽपि पुरुषव्यक्तिरविश्वास्या इति। अत एव अरुन्धत्यपि वसिष्ठमप्यशङ्किष्ट। किं नोशनोवचनमप्यतिक्रम्य ययातिरविज्ञातं देवयान्या वयोरूपवरिष्ठां शर्मिष्ठामगच्छत्? किं न वा शतक्रतुः सत्यां सत्यां पुलोमजायां गौतमजायामगच्छत्! किं न वा चन्द्रः स्थितायामासेचनकरूपतरङ्गिण्यामनुरागिण्यां रोहिण्यां गुरुतल्पगमनमकरोत्। देवगुरुरपि न किं स्थितायां लब्धरूपसारायां तारायामुतथ्यभार्यया ममतया सह संबभूव? किं बहुना वाचनिकेनापि पुम्भावेनाचेतनः शास्त्रविधिरपि सहसोक्त्या व्यभिचरति। तथा हि आनुमानिकेऽप्रत्यक्षे अनुपस्थितेऽदृष्टफले परलोके जनं प्रवर्तयति निवर्तयति च तादृशादैहिकसुखात् नियमयति तु प्रत्यक्षानुमानयोः प्रत्यक्षं बलीय इति। उपस्थितं परित्यज्यानुपस्थितग्रहणे मानाभाव इति सम्भवति दृष्टफलकेऽदृष्टफलकल्पनमनुचितमिति चेति व्यभिचारोऽपि दोष इत्याधुनिकमेव। पुरा किल सत्यपि परिणये पशूनामिव नराणामप्यपहृता प्रवृत्तिरासीत्। एकदा तूद्दालकस्य परमर्षेर्भार्यायां केनापि विप्रयूना

रिरंसया रहोनीतायां विज्ञातवृत्तान्तेन तत्सुतेन श्वेतकेतुना व्यवस्था समकारि-इतः परं स्त्रीपुंसौ व्यभिचरन्तौ पतेतामिति । दृषकतावीजमप्यन्विष्यमाणं व्यभिचारस्य वर्णसंकरत्वापादनम् । जातिस्तु विशुद्धं मातापितृजत्वम । विशुद्धिस्तु पितृपित्रोस्तत्पित्रोस्तत्पित्रोरिति क्रमेण ब्रह्मपर्यन्तेन लभ्येति दुर्निरूपा दुर्लभा च ।

अस्तु वा जातिस्तत्प्रायं न केवलं स्त्रीणामेव व्यभिचारेण किन्तु पुरुषाणामपीति तुल्ये दोषे निरुद्धैः पुरुषैर्भिन्नश्वेतकेतुसेतौ कुशलाः स्त्रियोऽपि प्रायशस्तमभ्यनन्दन् । तथाहि गुरुपत्नी तारा चन्द्रेण, उतथ्यभार्या ममता न म गुरुणा, नागकन्योलूपीनाम धनञ्जयेन, वालिपत्नी तारा सुग्रीवेण, रावणभार्या मन्दोदरी च विभीषणेन समगंस्त । समस्ताश्चैता विशिष्टस्थ नवर्तिन्यो राजन्त एव पतिमनुरुन्धानाश्च सीतादमयन्त्यादयो न सुखमवापुः । किं च श्रुतिस्मृतीनां नानाविधभेदभिन्नतया मार्गसंशये 'महाजनो येन गतः स पन्था' इति व्यवस्थितिपथि महेन्द्रचन्द्रादिमहापुरुषसंगृहीताद् वर्त्मनो दुरदृष्टं विना क इव भ्रंशयेत् । बेदवच्च कामादेशस्यापि देवाज्ञारूपतया कर्तव्यतासंशये प्रत्यक्षादिन्यायेन फलतारतम्येन च काम ज्ञायाः कर्तव्यतायां क इव विचक्षणो व्यामुह्येत । व्यामुग्धा एव च तदवहेलनजनितपातकवशाद् धूलिधूसरा मुण्डितमुण्डा जटाधराः शीतवाताद्यनेकक्लेशाननुभवन्ति । अस्तु वा मतान्तरम् एतत्तु इति । तत्राप्यधिकारपर्यालोचनायां 'दरिद्रं च तपस्विन' मिति स्मृतिवचनाद् यौवनसुखमनुभूय वार्द्धके विहिततपसां ययातिदिलीपप्रभृतीनां महामतीनामाचाराच्चानुपनतसुखसाधनस्य भोगाक्षमस्य वाधिकारः प्रतीयतते, नतूपनतसुखसाधनस्य भोगक्षमस्य वा फलमपि वाङ्मनःकायक्लेशमयस्यास्य तपसो रम्भादिरम्यरमणीसङ्गमसु-

त्वात्मकः स्वर्ग एव कथनीय इति पक्षपातमात्रं रम्भादिस दृशकामिनीसंगमसुखमयेनोपस्थितिनानेन किमपराद्धं यदयमुपनत सुखसाधनैर्भोगक्षमैश्च जनः परित्यज्येत ?

न च स नित्यः प्रध्वंसश्रवणात् किं बहुना 'प्राज्ञस्तत्कर्म कुर्वीत येनान्ते सुखमेधते' इति निगमवाक्यादन्ते शममयं कर्म करणीयमिति व्यवस्थिते विधावन्ते विगलितवेद्यान्तरमानन्दमयं सुखं च सुरतसुखं कथं नाम नाद्रियतां कृतिभिः । न चैतदनित्यम् । तदेव नित्यं किमु न यन्नित्यमुपलभ्यते ? अनुभूयमानयौवनसुखस्यैक सफलं जन्मास्तीति प्रतीतिविषयीभूता सती भवत्यतथाभूता त्वसतीति 'सुरतसुखं सुन्दरि ! पुंसां न तथा यथा स्त्रीणाम्' अत एव भङ्गस्वनो नाम राजा महेन्द्रमोहितः शिवसंशप्तसरसि स्नातः स्त्रीभूतोऽभूतपूर्वसुरतसुखमनुभूय पुनर्महेन्द्रदीयमानमपि पुंस्त्वं परिजहार । अहमप्येकदा भारतश्रवणगलितपैशुन्या सहानया शुन्या मुन्याश्रमललितपरिसरवनं कुसुमधनं पुरोपवनं देवोचितललितकुसुमचिचीषया ससम्भ्रमदमगच्छम् । तत्र च पत्रपुष्परम्यशाखिनो निशामयन्ती नवनवान्मधुरविहङ्गकरवानाकर्णयन्ती पुष्परुत्संगसञ्जितकरण्डमापूरयन्ती रम्यरम्यकुसुमधनं सकामा कामावेशवती वामा वामाक्षिस्फुरणजातविस्मया स्मयाविष्टा प्रलपन्ती मन्दं हृष्यन्ती ततस्ततो विलोकयन्ती करकलिततललितकुसुमकरण्डमचण्डरुचिरुचिराननं चतुराननसमानं परमधामानं सुदत्तनामानं मुनिवरमपश्यम् । उपसृत्य च ससंभ्रमा प्राणमम् । स तु मधुरमधुररवमधुकरपरिगतनमितकुसुमशिखसुरभिपवनवशचलितललितकुचतटवसनां, समदकरटिदलपठिततललितगतिजनितविधुतिवशचलितवसनदलविवृतरुचिरतरघनतरजघनाम् , वदनसुरभितरपवनमिलितचलमधुकरनिरसनचलितकमलकररणितललिततरमणिगणवलयां मां निरीक्ष्य परीक्ष्य वैजन्यं समुल्लसन्मदनो वदनोपाहितनयनः सप्रणयमयि सुमुखि ! किमायास-

यसि मदनवंशकरीरं शरीरमिदं गृहाणेमान्यपि परमसुषुमाणि कुसुमानीत्यभिधाय तानि भयलज्जामन्थरेण विधृतकमलबीजानि करेण सकुचस्पर्शं मदुत्संगसङ्गतकरेण प्राक्षिपत्। मया तु सस्मितया मितया गिराऽभाणि दासजनस्यार्चनीयेन भद्र। भव तापहारिणा हारिणा षड्वर्गस्य किमिदं विपरीतमनुष्ठितमिति। स तु मयैवमभिहितो हितोपदेशशाली शालीनोऽपि लीनोत्तमविवेको मदनायत्तो विदितसाङ्कल्पः परमविकसत्फुल्लगण्डफलककोमलकोमलवचनपाण्डितोऽखण्डितोरुविभ्रमः सस्मितमिदमवोचत्। अये मनोज्ञे सुवृत्तौ स्वयम्भुवौ दर्शनस्पर्शनजनितानन्दौ शोचिरत्पकन्दौ तवेमौ कुचौ कथं नार्चनीयावित्यर्चितौ यदि वाहमर्च्यस्तवार्चय कुसुमकुसुमसारकरेन रहस्यकान्तयेन विविधभावप्रभावनेनेति। ततस्तदाकर्ण्य सस्मितनमितवदनाया मदनाश्वासितचेता वदनमुन्नमय्य मे मुकुलितनयनं नवनन्दितमानसविनीततपस्विजनं सुरतसुखमिति वदन्नचुम्बत्।

ततः किसलयरचितशयने शयनेत्रहरणमत्रपाया कोमलतयान्तर्विलीयविशन्त्या इव ममाङ्गं प्रगाढमालिङ्गत। तज्जनितसुखरसभरेण मदनानलतप्यमानं स्वमङ्गं निर्वापयन्निव मुनिः सर्वजनसुलभमपि ब्रह्मेव योगैकगम्यं मोहमयमपि प्रसादनमिन्द्रियाणां मदनानलस्योद्दीपनमपि निर्वृतिकरमुपजनितविषमोच्छ्वासमप्याह्लादकरं पुनः पुनर्भूयमानमप्यपुनरुक्तं पुनः पुनरुत्पादितस्पृहमतिस्पष्टमप्यनिर्देश्यस्वरूपमतुलस्पर्शसुखमनुपमरसमनाख्येयमनुभवैकगम्यं निर्वाणमिवापरप्रकारं स्मर्यमाणमपि सुखजनकमतिसर्वसुखं सुरतसुखमनुभूय प्रसन्नः सर्वभाषाभिज्ञतां सकलकलाकौशलं सौभाग्यघटनसामर्थ्यं जातिस्मरत्वं च मे प्रादात् जातिस्मरत्वमेकस्यै मदनुवचनपरायै शुक्यै चेत्यभिद

धानैव तीक्ष्णाञ्जनदानगलन्नेत्रजलाविलामाक्रोशन्तीं च शुनीम्
अङ्के विनिवेश्य विषादमभिनयन्ती तदश्रुजलं च मार्जयन्ती स-
मभाषत अयि मुग्धे ! किं तया चिन्तया जातया यया पीडिता
भृशं रोदिषि । मन्ये मुनिवरप्रसादोऽपि अयमप्रसाद एव ते येन
प्रत्याख्यातमद्वचनशतं स्मरसि पूर्वजन्मवृत्तमिति । शीलवत्या
तु केयं कथमासीत् किं चानया कृतमिति ससम्भ्रममनुयुक्ता
पुनरसाववाचष्ट-सुमुखि . रहस्यमिदमनाख्येयं तव तु किमपि मम
न गोप्यमित्युच्यते । सुलक्षणा नामेयं पूर्वजन्मनो मम सपत्नी
त्वीति सखीभावेन मयाभिहितानि हितान्यनाकर्णयन्ती वारय-
न्ती च मां व्यभिचरन्तीमुपहसन्ती च पतिमनुरुन्धाना सती
प्रमीता सतीमां योनिमापन्ना पुनरापन्ना ज्ञानमियं मदन्तिकम-
स्यजन्तीव सीदन्ती रुदन्तीति च निर्जीवकलभावमावेदयन्ती ।
अहं तु कामाज्ञैकवशम्वदा प्रियम्वदनामवल्लभेनानेन चेत्वरी
सुखमनुभवन्ती मदनभवनीयखेदमनुभवन्ती परिभवन्तीमां
भवन्तीवान्यादृशी पूर्णसुखभरेणासम् । इहापि जन्मनि मुनिवर
प्रसादादेवतैव पूज्यमाना खेदमानान्यजनखेदवारणसमर्था यथे
च्छं विहरामि । शीलवती तु तदुदन्तश्रवणजातसंभ्रमा व्यभिचा
रिपतिवार्ताश्रवणपरमार्ता च सञ्जातकोपातिशया शयाहितक-
पोललोलाक्षी सुरतसुखोद्भावनोद्भूतप्रभूतमन्मथावेशा सावेशा
पर्यश्रुरस्याः पादयोर्निपत्याऽगदीत् वा च मे गतिरिति । इयं तु
तन्नयनजलं समार्जयन्ती तन्मुखमुन्नमयन्ती करुणामभिनयन्ती
वशयन्ती च तां पुनरवोचत्—मा विषीद वत्से ! विविधविद्या-
विज्ञायां वशगायां मयि स्थितायाम् । अहं हि त्वदादिष्टा विशि
ष्टात्ममतिमवलम्ब्य सुदुर्घटमपि घटयेयमपि देवकुमारं यद्यभि-
लषसि न चेदमनुचितं पतिषु सत्सु कुटिलेषु । पश्य—

अपरां गतवति भर्तरि सवितरि देवो चकोराक्षि !
कमलिन्योऽऽपि रमन्ते मधुरकमुपवेश्य कोशान्तः ॥१॥

अपि च—

गतवति भर्तरि वामे कामेनान्यां सकामनामुचितम् ।
किमु न नरान्तरमुपगन्तुं नामेहास्ति वामानाम् ॥२॥

अन्तरात्मा च मम—

चटुनाकर्षणपटुना पटुभायकचेतसोऽप्यधुना ।
तव वाञ्छितमभिवाञ्छति कर्तुं चित्तेन वित्तेन ॥३॥

तदादिश किमपि कामिनि ! यामि नितान्ततान्तायास्त वोपकृत्यै येन सुखमिति । शीलवत्या तु यथोक्तयानयाऽनयाचारिण्या तदित्थमिति मन्यमानया लज्जमानया चाभ्यधायि । अयि वत्सले ! यत्क्लेशमभिहितं भगवत्या तेनास्मि हृष्टा पुष्टा पुनराकृष्टा सौहार्देन ते निवेदयामि-अद्य खलु वयोबलप्रबलमदनानलदह्यमानमानसायाः प्रियावहेलनपवनादधूतशीलाया भीताया श्च सुलक्षणोदन्तादपगतापचारदोषशङ्कायाः समीहते मानसं मम विकर्तुं नेहते परमितो गन्तुमिति । इयं तु तया तथाभिहिता सुहितायमानमानसा दत्ताधिकधनेन मानधनेन तां योजयाञ्चक्रे चक्रे च क्रियां वयस्यां शिष्यां धियाञ्चातिकां पाञ्चातिकां प्रतीक्षमाणा कानिचिदहानि तत्रैव सुखवासम् ।

इति श्रीदीक्षितचक्रपाणिविरचिते
दशकुमारचरितशेषे प्रथम उच्छ्वासः

## द्वितीयोच्छ्वासः

अथाकर्ण्य तामागतां गृहगतां गताधिस्तदुपनीतानन्तरत्नचयभासुरभाण्डमवलोक्यातिहृष्टा पृष्टानामयां तां सल्लाभ

वृतान्तोक्तौ न्ययुंक्त। सा त्ववादीत। अहमितः प्रस्थिताऽर्थिताऽशनयाभ्यां ताभ्यां वृद्धाभ्यां स्त्रीपुंभ्यामशनं प्रदाय ताभ्यां सहैव ताभ्यां मुदिताभ्यां पुष्पोदसरस्वतटं दक्षिणेन व्रजन्ती व्रजतीरे विलोकयन्ती स्नातकमुनीनां वामतस्तत्समयपूजितानि कलकूजितानि विहङ्गमानामाकर्णयन्ती पुरतो रतोत्सुकचपलखञ्जनविहगमिथुनानि जलसम्भृतकलशान् पत्रफलपुष्पशालिनः शाखिनश्च जनागमावलोकनभयेनान्तर्ह्रदयान्तर्ह्रदयोत्पतिताद्वकुलादाकुलात्पतितान्मीनानप्यवलोकयन्ती सङ्कल्पवल्पितैरपि हर्षकरणैर्वसनाशनालङ्करणैर्विहरन्तीं त्वां स्मरन्ती वृद्धावुपचरन्ती योजनमिव गत्वोपकूपं सङ्गतेभ्यः पान्थेभ्यस्तातस्तति प्रवृत्तिमुपलभ्यमाना मुग्धसमृद्धजनशालाया विशालायाः पुरः पूर्वस्यां दिशि पुरोपवनमठिकायां स्थितिमकरवम्।

तत्र च शनैः शनैस्तालपत्रपुस्तकं वाचयन्ती चित्राः कथाः कथयन्ती पूज्यमाना नगरनारीभिरेकदा जातपरिचर्याक्लिताग्लानां म्लानाम्बुजवदनां नाम्ना मदनां मदनाङ्गनाकल्पां वणियोवधूमवधूताभरणां व्यवसितमरणामशरणां नर्मसितचरणां पुरोपगतां वीक्ष्य प्रेमप्रवणा पुण्याचरणां तामुपवेश्याहमपृच्छम्। किं ते वदनं मलिनमिति। सा तु विकला विलपन्ती मामवादीत् अयीक्षिणके न क्षणिके विशिष्यवाच्येऽप्यस्मिन्खेदे मूकायमाना भवत्समानामिह सखीमलभमानाऽसहमाना खेदं खेदगेहं देहं त्यक्तुमीहमाना जलेन वाऽनलेन वा विषेण मिषेण देवार्चनस्य त्वां द्रष्टुकामा समागतास्मि। सम्प्रति तु खेदातिशयविकलापि कलावतीं वीक्ष्य भवतीं किञ्चिदिव हृष्टास्मि। पृष्टा पुनरात्मीयमशक्यवारणमपि दुःखकारणमावेदयामि। इह खलूत्तरतः पुरतः श्रमणमठिकायां निवसतां सतामतिमतेन हतमतेन पिचिण्डिलेन कुहनाकृष्टनगरवासिना पत्रोर्णवा-

सिना भूतिभूषितजटाभिर्जटाभिलप्यमानेनोत्लाप्यमानेन जन निर्द्वदोऽभिनन्दिना कर्मन्दिना केनाप्यलीकाध्यात्मवादैर्मिथ्याज्ञान निदर्शनैः स्त्रीसंसर्गक्रोशनैश्चोपहतमतिर्मम पतिः सम्प्रति गृह समुपागतां मां नाभिनन्दति प्रसारितभुजश्च नाङ्कपालिं ददाति । नालिङ्गति न स्निग्धमवलोकयति न सस्मितं मितमपि भाषते न प्रहृष्टवदनः समदनश्चुम्बति न रहस्यमावेदयति न सान्त्वयति खिन्नाम न स्पृशति न विलोभयति न वा गृहवार्तां सुखार्तां मामापृच्छते, किन्तु स्वमन्तुमापृष्टोऽपि परिवृत्य पृष्ठमेव प्रयच्छति नोत्तरम् । तदधुनाशिखी पतिर्मुक्ता मुक्ताशा सुखसम्भवे भवे खेदकारणं प्राणाधारणं निश्चित्यासून जिहासामि । किं करोमि नहि किञ्चिदिह शरणं मरणं विना दिमानितानां वनितानां विशेषतः कुलजानामिति अभिधाय चैतदपिधाय मुखमञ्चलेनोच्चैः प्रारोदीत् । अहं तु दयमाना किञ्चित्स्मयमाना चाब्रवम् । अयि मदने ! मारोदीर्मारोदीर्णशाखहता नगताः के के मुनयः शरणं चरणं वनितानाम् ? वनिता नामेयं मदनशरविषविसरविकलमनसां सञ्जीविनी वल्ली । कस्य च परममुनेरपि मनः किसलयमिव मदनपवनवेल्लितं पतति । तदयं मदयन्ती नित्यं सुखं जनयन्ती मुक्तिमयीं त्वामुपेत्य किं मोदते मग्धः ? यदि चाहमस्य मति विपरिवर्तयेयं, नयेयं च तमपि किम्पचं विगलितज्ञान यन्त्रमन्त्रतन्त्रं कामिनीकटाक्षकूटयन्त्रबन्धं कस्तर्हि प्रीतिदाय इति? मदना तूर्न्नमितवदना किं ब्रवीषि ? सर्वमाभरणकूटं सर्वस्वं जीवितञ्चेति समस्तं व्यस्तं वा यद्यदीच्छसीत्यवादीत् ।

अथाहं तां गृहाय प्रतिनिवर्त्य समुपकल्प्य च विविधं प्रतिकर्म कर्मठा कृतोज्ज्वलतपस्विवेषा केषामपि न प्रत्यभिज्ञाविषयस्वरूपा रूपालोचनचतुराणां विदुषिपरा कपटपाटवे समर्था चित्तारूढतदर्थां परमपुमर्थाघातसमर्थानलमर्थानतुच्छि

न्तयन्ती सहैव तया स्थविरया तदाश्रममगच्छम ।

तत्र च चिरोपविष्टं तपोनिष्ठं तमवलोक्य वियाता जातातिप्रतिभा प्रतिभासमानमुखी सम्मुखीभूयाभिवादये भगवन्नमित्यभिधाय विधाय च ललितमञ्जलिं शिरोऽवनम्य प्राणमम्। ततोऽभिनीतवैराग्यवासना सनारायणस्मरणं तेनाशास्येत इत्यादिष्टासना विनयवती परिहृत्य तदासनोपकण्ठमासनोपविष्टां ननु साध्वि ! कस्यासि, कथमिहावससि, कथञ्च ते वयोरूपविरुद्धोऽयमाश्रमपरिग्रहः, किञ्चेहागमनकारणं तव कथयेति तेनादिष्टा दिष्टादेशादाकर्णयत्येवोपविष्टे दिष्टेहितवशाद्विशिष्टेनानुशिष्टे शिष्टे तन्मताभिनिविष्टे मदनानिष्टेहिताविष्टे भर्तरि तस्याः समवादिषम ।

भगवन् ! पूर्वेषु कामरूप्यामर्थिगण्यार्थ्यस्य धनिकवर्यस्यार्यस्य धनपतिनाम्नोऽनपत्यस्यामत्यस्याविषयस्याहं कुमारी नारीरीतिमसम्विदाना दानायत्तायत्ताऽजर्ये वर्ये नार्येणार्येणावन्त्यां वसता सताहं परिणीतापि तापितापया प्रियालापमजानती नतीरवधीरयन्ती रयं तीव्रं तिरयन्ती वामा कामास्त्राणां कोपकलुषित ोपितपतिकाभूवमतरुणी तरुणीभूताऽभूतापत्यापत्या विना विनाशं नानाखेदानां नाऽऽकलयन्ती कलयन्ती वामं कामं पत्युः कृतवन्तं गतवन्तं खेदमात्मानं न मानयन्ती निशानिश्यमतिशयाना शयनं न शयनानुशयनातिशयानालब्धसुखाशया नाथस्याममहं नीतानेकदिना विना धनं चामुनाधुना व्याकुला कुलाचारमवन्ती भवन्ती करुणा करुणालापा नकरुणा तरुणानामरुणा कोपेनानर्थकयन्ती नागतपतिकागतिकाहं गतिकामा कामानां रोधं रचयन्ती चयं तीव्रं तिरयन्ती योपा दोपाणां शान्तिं विना निर्विण्णास्वजने प्रजने वीताशा वीताशा परलोके लोकेश्वरमुपदिष्टा दिष्टादेशान्मु

निनापि वरिवस्यन्ती स्यन्ती विषयाशां प्रव्रजिता । अथ जितारिषड्वर्गापवर्गाहितचित्ता वित्ताचारैरपवित्ताभ्यामनन्या यत्ताभ्यां सह पितृभ्यां वृद्धाभ्यामयातयामयौवना वनाश्रिता-श्रितावनाय स्पृहयन्ती रहयन्ती लोभं कदन्नं व्रतयन्ती व्रतयन्ती वन्यमन्यदन्नं वा पुण्याविष्टानुशिष्टा शिष्टैस्तीर्थान्यट-न्ती रटन्ती रामनाम चिरमटी तीर्थाटाभ्यासङ्गेनेहागत्य-वसन्ती मुह्यन्ती वालाम्नाये विगतव्याजाज्जनसमाजात सकल-न्यायदक्षं पक्षं साधुजनस्य शमवन्तं भगवन्तं समाकर्ण्य पुण्य-वर्द्धनाय भगवद्दर्शनाय समागतास्मि । समागत्य च चरित्रैः पवित्रैरपरतापसानतिशयानमतिशयानमितषड्वर्गमानसं मानसं गन्धशून्यं तपःसिद्धिमन्तं भवन्तं समवलोक्य सफलं मन्ये जन्मेति ।

स न वैराग्यविरुद्धया स्निह्यन्त्या दृशा मामवलोकयन्न वदन । अयि बासु कथय कः संशय इति ? अहं तु निर्वेदमभिन यन्ती मदनमुन्नमयन्ती प्रत्यवादिषम् ।

भगवन ! धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः सर्वतन्त्र संमतास्तत्र तपोदानदयायज्ञादिस्वरूपोऽनन्तसुखस्वर्गादिप्रतिप त्तिप्रतिपादनफलो धर्मः स्फुट एव तावत् । अर्थोऽप्यर्जनवर्द्ध नरक्षणहेतुको रजतसुवर्णमणिमुक्तादिरूपो नानालङ्कारवसन-प्रासादोपवनगजरथतुरगमहादानयज्ञसन्तानतीर्थप्रतिपादनफल स्फुट एव कामोपि विषयसुखासक्तचेतसोः परस्परप्रीतिमतोः स्त्रीपुंसयोः परस्परस्पर्शविशेषस्वरूपः स्वसंवेद्यामन्दानन्दफल स्तादृश एव मोक्षस्तु कामादिवत्प्रत्यक्षप्रमाणविषयोऽनिर्देश्यस्व रूपो वाङ्मात्रव्यवहारसाध्यः कथं पुरुषार्थः ? नहि कश्चिन्मुक्त एवोपेत्येदृशो मोक्ष इति मुमुक्षुं प्रति वदति न वा मुक्तदशास्व-

लोक्येदृशो मोक्ष इव मुमुक्षुः स्वयमेव प्रमिनोति सति च मोक्षे नित्योत्तमसुखस्वरूपे परमपुरुषार्थे सकललोकपतिर्विबुधाधिपतिर्गीष्पतिमहितमतिर्दिवस्पतिर्नन्दने सहाप्सरोभिर्विहरेत किन्तु रहयन्पदमैन्द्रं मोक्षायैव यतेत इन्द्रोऽप्यनेकसहस्ररम्यरमणीभिः सार्द्धं न रमेत मोक्षपथाच्च च्युतो नाच्युतो भवेत् एवमन्येऽपि लोकपालाः परित्यक्तकर्मजाला मोक्षायैव प्रयतेरन न सहेरन्नतिवलतारकादिदैत्यजनितयातनाः साक्षाद् भूतपरमपुरुषान्तमेव परमपुरुषार्थं प्रयाचेरन नत्वनित्यसुखाधिकारलाभलुब्धमतयो दनुजवधम्। न भवेयुरपरेऽपि लोकपालसमानसुखा नलनहुषाम्बरीषप्रमुखा राजानः स्वर्गसुखाशया जगति यज्वानः साङ्गसमधीतसकलर्षयः परमर्षयोऽपि न कलत्रैः समसगंत तदलभ्यश्च कथमितरलभ्य इत्येकः संशयः। अस्तु वा मोक्षः सुखस्वरूपश्च परं तदनेकजन्मतपःक्लेशजनितसंस्कारविशेषजन्यप्रकृष्टज्ञानसाध्यः स प्रायो दुःसम्पाद एव उपकरोति चैकं ज्ञानिनमेव। कामस्तु सुखसाधनः सुखफलोऽपत्योत्पत्तिहेतुतया परलोकसुखहेतुश्च बहूनुपकरोति। तथाहि—

रम्यं यस्य वचो विभूषणमथो वासो विचित्रं मृदु
प्रासादोपवनं सुगन्धघटना वीणारवः साधनम्।
रामालिङ्गनचुम्बनादिपरमानन्दः फलं तत्फलं
चापत्यं न पतन्ति येन पितरः कामाय तस्मै नमः॥१॥

तिर्यक्प्रेक्षणवक्रभाषणपरावज्ञाद्यसंभाषणं
कौटिल्यं च विरुद्धकर्मरचना सौख्याय यस्योदयात्।
आदेवासुरनागकीटपतगं सौख्यप्रदानव्रती
संसारोद्भवबीजदिव्यमहसे कामाय तस्मै नमः॥२॥

अर्द्धाङ्गे विनिवेश्य शैलतनयामास्ये गिरां देवतां
लक्ष्मीं वक्षसि भोगिनः खलु शिवब्रह्माच्युता योगिनः।
इन्द्राद्या अपि तत्तदिष्टवनितासङ्गैकबद्धोद्यमा
देवैरप्यनिवार्यवीर्यमहसे कामाय तस्मै नमः ॥३॥

दुःखं यद्विदलन्ति तेन कथिता दाराः सहारा अमी
येषां लोचनगोचर नहि गता व्याधौ समाधावपि ।
उर्वश्यादिमुखावलोकनसमुद्भूता प्रभूता मुदो ॥
विश्राणाः किल कौशिकादिमुनयः पृच्छ चास्तवेच्छा यदि ॥

किं बहुना प्रेत्यापि लभ्याय यस्मै यतन्ते तपोभिस्तपस्विनो यज्ञैश्च यज्वान इति धर्मार्थयोरपि तत्साधनतयैवोपादेयता जगति । किं चैषां धर्मादर्थोऽर्थात्कामः कामान्मोक्षो बलीयानित्येवं परनित्यान्तरङ्गापावादानामिवोत्तरोत्तरं बलीयस्त्वेन निर्देश इति पक्षः । आहोस्विद्धर्मादर्थो भवति ततः कामः कामान्मोक्ष इति कारणमालावन्निर्देश इति । अथवा परस्परनिरपेक्षाः स्वतन्त्रा एव पुरुषार्था इति । तत्र यद्यपि धर्मस्यार्थं प्रति तस्य च धर्मं प्रति तयोश्च काम प्रति कारणत्वदर्शनान्निरपेक्षत्वासंभवान्नान्त्यः सम्भवति । धर्मस्यार्थायार्थस्य च धर्माय तयोश्च कामाय परित्यागदर्शनादाद्योऽपि न सम्भवति, किन्तु मध्यम एव युज्यते हि मोक्षस्य सुखात्मकत्वे तथाविधकारणं कारणानुगुणा हि कार्योत्पत्तिः तथाप्यनुशासनविरोधो भवति इति द्वितीयः संशयः। दुरितादिफलं च गौरोहमित्यहंप्रत्ययविषयत्वेन देहस्यैवात्मत्वेन तद्ध्वंसे भोक्तुरभावात्कस्य भवति। अथाहं सुखीत्यहंप्रत्ययविषयत्वेन देहातिरिक्तस्यात्मत्वे देहान्तरादौ तत्फलं भोक्तव्यमपि तु तस्य स्वसाक्षिकत्वे प्रयोक्तुरभावात्कस्य वा कथं वा भवेत्। परसाक्षिकत्वेपि तस्यैकत्वेन देवदत्तादिदुरितादिफलं यज्ञदत्तादिफलं यज्ञदत्तादिना भोक्तव्यं देहान्तरादौ सत्यपि तदुपभोगे

का क्षतिरिति तृतीयः। प्रतिदिनमेवमालोचयन्ती संशयन्ती प्रारब्धे कर्मण्युपशयपरित्यागादनुशयवती श्रीमच्चरणशरणमापन्नेति। स तु सकलमेतदाकर्ण्य सविस्मयो विमृशन् सानुशय इव विमनायमानो मन्यमानोऽवितथा मदुक्तीमुक्तीहामुपेत्य मदनमोहितो लोहितोरु यतिधर्मो घर्मोदबिन्दुचितो मद्वदननिहितनयनोऽभीकस्तूष्णीक एव तस्थौ। अहमपि मदनानुगुणं किंचिदिव चेष्टयन्ती वेष्टयन्ती शिरोऽवगुण्ठनपटेन कपटेन कुचाभोग प्रदर्शयन्ती विलोकयन्ती स्मितमधुरं विलोभयन्ती क्षणमतिष्ठम्। अथानिच्छन्तमपि जनसमक्षं किमपि वक्तुमक्षमं तमामन्त्र्य प्रस्थितयानुगम्यमानया तदीय चित्तवृत्तिरामया कृतप्रणामया मया सहैवोत्थाय श्रुतमदुक्तपुरुषार्थो-गतिश्चपलमतिस्तत्पतिर्बहिरुपेत्य मामेव पण्डितां मन्यमानो वितन्यमानोरुविश्रम्भः कर्तव्यमपृच्छत मदुपदिष्टश्च तन्मत धुन्वानो मन्वानो मदनमेव पुरुषार्थम्मद्विसृष्टोऽतिहृष्टो निजावासगतः समदनां मदनामुज्झतकदनामतनोत्। ततोहमश्रमाश्रमाय व्रजन्ती स्थविरान्वीक्षया किञ्चित्परिवृत्य विलोकयन्ती चिन्तयन्ती तदिङ्गित चेतसि व्याजेनानुगच्छन्तं वक्तुमिव किञ्चिदिच्छन्तं तमवलोक्य भूयो बद्धमञ्जुलाञ्जलिः समन्दस्मिता प्राणमम्।

भ्रूसंज्ञया चाहमाहूता तदाकूताधिगमा गतोत्कलिका कलिकावलादकालकामपजिता तेन रहः समुपवेश्याभ्यधीये अयि सुन्दरि! त्वन्मुखावलोकनसमकालमकालदेशसहनेन जनितकदनेन मदनेन दमशमौ विजित्याहमात्मसात् क्रिये विक्रिये चेन्द्रियैस्तदधुना धुनासि किं न रसिके सरससकलकामकलिकलाविलासकुशलविमलकोमलमृणालमृदुललितबाहुयुगलसमालिङ्गनजनितानन्दरसेन प्रत्यङ्गमनङ्गसंभूतमभूतपूर्वमतिदुःसहममुं न मुञ्चन्तमपरथा मदङ्गानि संतापयति न किं त्वां मदनशरस्तरुणि! मोहनो नामेति?

ततोऽहमेवं तेन मोहितेन सप्रणयं सविनयं समदनवेदनावेदन चाभिहितापि विहितात्मकामरोधा बोधाय तस्य समवोचम् ।

भगवन्ननेकैः सभ्यैरिभ्यैः प्रार्थितापि न कामाकुला कुलाचारमवन्तीष्ववन्ती चिरमवसम् । इहाप्यागता गता शम मता सताम किञ्चनापि किञ्चनापि नागमविरुद्धमाचरन्ती चरन्ती तपो नाचरतीव्रवेदनाभवाखिला विलासमयरतिसुखानि खानि तदभिमुखानि रुन्धाना धानाहारिणी हारिणीमागता भूमिम् । युवभिः प्रार्थितापि तापितापि वामेन कामेन सती सतीव्रता सतीव्रतानुरागिणी रागिणी नैव विषयेषु । तदधुनाऽसाधु नाकरोधि विरोधि सदा सदाचारस्य महासमुपहासविषयविषयरसास्वादवानुबन्धि प्रतिबन्धि तपसः प्रतीतस्यापि भतो भवतोषकरं वचनमदो मदनमदोल्लासकरमधुरमपि न मन्तुहेतुमनुमन्तुमुत्सहे । भवानपि ज्ञानवान् ज्ञानवैराग्यवाधनमसाधनं सुकृतस्य किमिदमनुतिष्ठासति ? मतिमतो हि नोचितमभ्यर्हितजनविगर्हितमिन्द्रियानुवर्त्तनमिति । स तु मयैवमभिहितोपि हितोपदेशं दैवहतोऽभिहतो मोहसदनेन मदनेन पुनरशंसत ।

अयि भद्रेऽजनितफले गगनकुसुमायमाने ज्ञानवैराग्ये क्ववसतो न सतो रेतयोर्जगदुत्पद्येत विद्यमाने वा कमुपकुरुतः । श्रूयते हि पराशरप्रभृतीनामप्यचिन्त्यधृतीनामालोचितस्मृतीनाममलमतीनामुभयविरुद्धरुद्धसकलानुशासनकामशासनपरिपालनम् । किमहं ततोपि शुभंयुर्मदने चाहंयुः शुभवदने ! वद नेह यथागतस्तथागत एव भवतीति सुगतोऽपि तथागतः किमुत? किंचानुपदर्शितसमक्षफलैरफलैः परानुशासनैरपरोक्षसुखविषयविषयापोह एव मोहः । मदनविकल—सकलेन्द्रियाल्हादकरण—मखिल—सुरासुर—विद्याधर—गन्धर्व—किन्नर— पिशाच-गुह्यक-यक्ष-राक्षस-मनुज- पशु-पक्षि—परमानन्दनसचेतनरोमाञ्चयस्यापि प्रहर्षजननमपत्यपरसुखं सुरतसुखमेवापवर्गो न मोक्षोऽपवर्गः ।

पुरतस्तदेहि मे देहि मेखलाभरणभूषापदम् । विमलाचरणे! चरणेन स्पृशसि यं स कृती । विनापि भूषणं भासुरे भासुरेशरमणीनामिव ते खञ्जननयने नयनेप्सितं मे वृथाभावम् भासितभवने भवनेऽन्तरङ्गितानुग्रहिणी पङ्कजवदने वद नेप्सितं मेऽनुमोदसे किमिति । रञ्जितमानसे मानसेऽवनं किं कुरुषे? अयि कोपने कोऽपनेतुं क्षमते मनस्ताप त्वद्गते ? रूपेण तुलितमेनके मे न केऽपि वचनमिहाभिभवन्ति । अवधीरितापरवधूरवधूनयसि प्रिये किं मां गुरुतरजघने जघनेष्ट तव किमपि काममहम् । रामे रामेऽनुगृह्यताम् । अवले अवलेपः कः प्रणते सुवृत्तपीनोन्नतकुचे कुचेष्टितं मे क्षमस्वेति अभिधाय चैवं निधाय चीवरपटे घटे निहितमतिहितं प्रहर्षजनकं शृङ्गीकनकमांतमात्रमतिमात्र विनययुतः पुनरवोचत । अयि—

वर्णेन जितसुवर्णे कर्णे कुरु कर्णिकामिमां बामे !
अन्यां च मम समक्षं दक्षे दक्षे कुरु श्रवणे ॥
पीनोन्नतकुचभारे हारेण तरुणि लभ्यतां कान्तिः ।
अपरञ्च भूषणमिदं प्रतिप्रतीकं मयार्पितं सुमुखि !
परिधेहि सुन्दरि निधेहि च जने दृशं भृशं पीडया दीने ॥ इति

अथाहमित्थं चाटुशतलालिता पालिताभीष्टतन्मता नतानना ननाक्षरालापमन्दविस्तरा स्रस्तरावलम्बिनी विलम्बिनीलालका व्रीडातङ्कमन्मथोपजातविविधमुखरागा रागावेशपेशलं तेन समभुक्षि । ततः प्रसन्नमपि तत्क्षणासन्नसमय एव किञ्चिदापन्नमिव विषण्णं तमवलोक्य सव्रीडस्मिता मिताक्षरमपृच्छं किमसि विकल इवेति । सोऽव्रूत । अयि सुमुखि !—

तवामुना सङ्गमसुखेन विमुखेन मन्दानां विस्मृतसकलसमाधेर्ममाधेरद्य मानसं मानसंयतमपि विषयीकृतम् येनामुनाधुनाव-

तावतारितं मानसे मानसेविनीवृत्तम् । किं तदिति पृष्टो विसृष्टोष्ण-
निःश्वासः पुनरवोचत् । अहमस्मि साम्प्रतं शूरसेनेषु वसतः सतो
विततविमलयज्ञव्रतस्य प्रियव्रतस्य द्विजन्मनोऽसदमित्रो वसुमित्रो
नाम तनयो नयोज्झितं कर्म परिहरन् व्यवहरन्नात्मबन्धुषु
सर्वजनमित्रमभवम् । कृतपरिणयश्च तरुणोऽकरुणोज्झितोऽपि प्रथम
संभोगसंमर्दमसहमानया वध्वा रुद्धयावधूता वधूतो यतमानोऽथे-
यमानोऽपि मलिनीकृताननां विमाननामेवोपेत्य तद्दोषजातरोषो
न रोषोपतप्तायां सुप्तायां तस्यां तदीयमात्मीयं च लसत्किरण-
मालमाभरणजालमुपादाय प्रावसम् । अथ यतस्ततश्चङ्क्रम्य-
माणो लसद्विविधशालायां विशालायामुपकूपं कांचन काञ्चनकलश
युगाञ्चितशिरसं चिरसंभृतवदनवासवशादुपनतमलिनं नलिनेन
वारयन्तीं लघुललितपदं प्रयान्तीं वनितामवेक्ष्य यथेयं कलशा-
निहितहृदयवृत्तिः पश्यत्यपि चलत्येवं ब्रह्मणि निहितवृत्ति-
वृत्तिविधेये व्यवहरन्नपि जनो मनोगतं ब्रह्म समुपैतीति सनिर्देशं
ब्रह्मविद्यामध्यापयन्तमुमापतिं ध्यायन्तन्तत्पार्श्वे वर्तमानं कञ्चनाव-
लोकयम् । प्रणम्य च तं सविनयमुपविष्टः पृष्टोऽमुना स्वगोत्रना-
माकथयमान एव विकोशासिधृतैर्वृतैरालोककजनैर्नासिकैरनुग-
म्यमानमानन्दशून्यं हस्तन्यस्तज्वलद्दशास्नेहपूर्णप्रदीपन्यस्तलोचनं
ससंभ्रमं भ्रमन्तं पुरुषमेकमपश्यम् । अपृच्छञ्चानुचरं तमनुचरन्त-
मेकं किमेतदिति सोऽब्रूत-

ब्रह्मजिज्ञासुनामुना विज्ञप्तो ब्रह्मविद्राजा भद्रासनो
नामैनं समजिज्ञपत् । यदीमं प्रदीपमेवंस्विधमेव प्रदक्षिणी
कृत्येहोपानयसि तदोपदिशामि ते ब्रह्मविज्ञानप्रकारं निर्वाणे तु
प्रदीपे समीपे चरन्तममुक्तनिर्बन्धं कबन्धमासिकास्त्वां करिष्यन्ति
इति । अयं तूक्तोऽपि तथाऽभीतोपनीतोपनाम्ना परविषय-
सम्बन्धेन चेतसावहितेन तथाविधिं विधायामुना राजानमुपसर्प-

तीति। अहं त्वेतदाकर्ण्य वर्ण्यमाननिजवार्त एव भृशार्तोऽपि श्रुताद्भुततदीयवार्तो राजकीयोत्तरश्रवणसमुत्सुकः सहामुनागत्य राजानमुपातिष्ठे। राजा त्वेवं स्वतो भातेन नीतेनैकाग्रतां चेतसा ब्रह्मणि वर्तितव्यमिति विहस्याब्रवीत्। ततस्तदुभयोपदेशविहितसकलेन्द्रियसंयमो यमोपरमात्परोऽपरोक्षस्तोषानिष्ठाऽरणो मरणोग्रभयसमाश्रितसमाधिरनाधिः श्रमणमठिकायामस्यां सरय्वम्बुपूर्णपरिसरायां सर्वजनहितायां पूर्वसंकेतविदितायां समयमनयम्। अधुना तु तवाऽमुना सङ्गमसुखेन विहितपुमर्थानिवचनेन वचनेन च विधूतसकलज्ञानसाधनः सुखसाधनं सुखफलं च प्रकामं काममेव पुरुषार्थं मन्यमानः सत्यमुभयलोकशर्मसाधनमपत्यं लिप्सुः सहचरीमन्वेषम्। न चाधुना संभवति तन्मुखावलोकसुखलाभोऽपीति चिन्तया पित्रोरेकापत्ययोः परित्यागेनात्मनि पापसंभावनया च खिन्नीभूतोऽस्मीति। ततस्तदाकर्ण्य किञ्चिदिव विषण्णाऽऽसन्नाशोकतरुतलनिषण्णा परितो विलोक्य त्वरितसमागमपिशुनैस्तत्कालोपजातशकुनैस्तमाश्वास्य खिन्नमश्रमाश्रमाय यान्ती पुन्नेपथ्यवतीमवतीर्णामाश्रमोपकण्ठे सहैकया जरत्या रत्या समां काञ्चिद्वनितामपश्यम्। सा तु दूरादेवावलोक्य मामभिगत्वरातिसत्वरावतीर्णचत्वरा। न त्वरावता निर्मिता वेधसा रूपेणातमेनका मे न कापि लोचनपथं गता यादृशी तादृशी स्वजनोचितमभिवन्द्य मदुपरिष्टासनोपविष्टा पृष्टा चष्टात्मानो गतश्रमा क्रमानुज्झितं सकलवृत्तम्। अयि महिते नहि तेऽस्ति किमपि गोप्यम्। अहमस्मि पाञ्चालेषूत्तरेष्वहिच्छत्रनगरवासिनो नन्दानुजस्य सहजानन्दस्य जनितानन्दा सुनन्दानाम नन्दना। नन्दनालयानां देवगन्धर्वकन्यकानां सुखमनुभवन्तीं मां तरुणीभवन्तीं पिताऽमितार्थनाय शूरसेनदेशवासिने प्रियव्रतपुत्राय कर्मणा सर्वजनप्रियाय नाम्ना वसुमित्राय प्रादात्। स तु प्रथमसंभोगसम्मर्दसहमानया

समानया पापया भयात्रधूतो धूतो मन्युनावधूय मां प्राव्रजत् । अथ बान्धवैः श्वशुराभ्यां पितृभ्यामपि तं विना विमानिता नितान्तव्याकुला कुलाचारमवन्ती समचिन्तयम् । अहो धिगिदं जन्म विशेषतः स्त्रीजन्म तदपि कुलेषु यदिहावधीरितापि किमपि कर्तुमक्षमा क्षमावती निवसामि । वयसा पुनरमुनाधुना सुनाशिनीं मदनवेदनां नीतानुनीतापि सखीभिः शोचामि सहमाना पुनरपमानातिरुष्टपतिवियोगदुःखान्यबला कथं जीवामि पतिवार्तामपि नवात विन्दामि । विपश्चिदपि कश्चिदिह नास्ति यः पृष्टो दृष्टं मम निवेदयत्येवेति कथं मे गतिरिति । ततस्तदागतां कदाप्यलक्षितां लक्षणलक्षितां रक्षितां नाम कामचारिणीमुक्तभाविप्रश्निकां विप्रश्निकामवलोक्य प्रणम्य सप्रणयं शुभासने समुपवेश्य समर्चयम् अथार्चनप्रीतया तयानुयुक्ता स्वखेदकारणमखिलमवोचम् । सा तु परितो विलोक्य नियम्य च श्वासं सहासं विहितप्रसादवर्षा सहर्षा मामवादीत् । अयि वत्से संपत्स्यते प्रियतमसमागमस्तव प्रयतमानायाः कतिपयैरेव दिनैरुत्तरत इति । ततस्तथाभिधाय विधाय च स्मितं सुभग मदभिमुखं मुखं सुखं निवेदयन्ती निरीक्ष्य मम हस्तं समस्तं पुनरब्रवीत् । अयि सुभगे जनिष्यते तव सुतद्वयं सुता चैकेति ततोऽमन्दानन्दा वन्दारुरहं विसृज्य तां प्रश्ननिश्चितां समर्चितां संचितांशुकैः सुखनीतदिवसशेषा दोषाशयनेनायाश्रितशयना नयनातिस्फुरणजातसंमदा मदालसेव तदुपपत्तिं चिन्तयन्ती जाग्रती समतिष्ठे । ततो जयन्ती नाम कामदं जपन्ती कथंचिल्लब्धनिद्रा स्वपन्ती स्वप्ने गवेषयन्ती पतिं भ्रमन्ती धनदाशायां कुसुमितरम्यसकलशाखिनि वने वनितोपदिष्टं पारिजातमवालोकयम् । अथाहमेतां कृतसंकेतां जरतीमतीवदीनां धनादिनोपचर्य विरचय्य च नरकपालादिना मनुजकायमिव प्रदीप्य गृहं निशि निरगाम् । अथ पथि मथितरथ्यान्धकारविमलदीपिकाविकाशसमुज्ज्वलं

जायमानविपुललोकं कोलाहलाहलमनल्पमागच्छदारचिकवलम-वलोक्य लोकवृत्तचतुरयाऽऽतुरया किंचिदिव भयेन मया जरती परतीव्रमया विलेयमवोचि । अयि भीते शीतेनार्ति दर्शयन्ती निरस्य तूलिकां तृणपूलिकामिमामुपादायापतितो जनानिमानुप-तिष्ठस्व । ब्रूहि चाप्यस्ति कोऽपि दयालुर्य इमां तृण-पूलिकां वह्निना ज्वलयेदहह दूरेत्यायाः नेहत्यायाः निशा-न्धतया नोपलब्धनगरमध्यवासायाः मम शीतेनाहमिव सीदति सुतेति । इयन्तु तथाकरोत् । तेऽपि भयेन कम्पमानामिमां मां च शीतेनैव मत्वा पूलिकादत्तवह्नयः सानुकम्पा बव्रजुः । अथाहं दूरनिर्गतेषु तेषु द्रुततरमपथेन व्रजन्ती दूरनिर्गता गताश्रमं गता-सुरिव भवन्ती कलकलहंसकूजितमोदितमानसं मानसं सर इव सरोऽवलोक्य प्रत्यागतप्राणा त्राणायात्मनस्तत्कूलरूढस्योरुगूढ-स्योत्तमपवनेन घनतरवपुलशाखस्य विशाखस्य केतोरिव वटतरोरधो व्यशिश्रियम् । अथ गतश्रमा भस्मनोपलिप्य देहं गेहं गतेव गतभ्रमा केशपाशं जटाबन्धं समुद्बध्य विधाय भिक्षुकीवेषम-शेषभूषणं भूतिगोलके निधाय रंहसा परेणोदचलम् ।

अथोत्तरेण नैमिषं विगतशठे क्वचिद्वै मठे सहानया कृता-हारा भूमावशयिषि । अथ कूजत्येव कृकवाकौ नाकौकसामाश्रये तत्र तीर्थे स्नात्वा कृताभिवन्दना चन्दनाञ्चितशरीरस्य विष्टरोप-विष्टस्य विनयविशिष्टस्य कस्यचिद्द्विजशिष्टस्य पृष्टदृग्विष्टस्य त-दुपदिष्टवर्त्मा सुपन्थानामाश्रित्य व्रजन्ती सृजन्ती तल्लाभसंकल्पा-ननल्पान् सङ्कल्पकल्पितैः सस्मितजल्पितैः सव्रीडवीक्षितैस्तदीयैर्मुद-मानयन्ती मानयन्ती चात्मानं दैवतं महयंती रहयंती कायसंस्कारं प्रियतमसंयोगलब्धभोगसुभगाभ्यः स्पृहयंती गर्हयंती जीवितं दिवसं चलिता ललिताङ्गिगीतिश्रवणसुखमुले कूले सविहगारवे सारवे सहानया न्यवसम् ।

एवमनुदिनं च प्रचलन्ती विदलन्ती शोकेन कोकेन वृत-
कोकीमुखचुम्बनेन समुद्दीपितमन्मथा तत्कथालाभखिन्नसा-
मानसा न सानन्दा दिवानिशं क्वचिद् दूरपतनसंजातशर्कर-
मलैः फलैरेव क्वचिन्नलिनीदलाच्छन्नतलैः शीतलैर्जलैरेव क्वचिदा-
स्वादजनितानन्दैः कन्दैरेव रसामन्दैः क्वचित्संपन्नगृहोऽपन्नेन
सदन्नेन क्वचिदापन्नगृहोपपन्नेन वर्तयन्ती नर्तयन्ती मनस्तथा
तथाविधाभिरतीतेषु दिवसेषूपदेशेषु पादचारखिन्ना तमविन्ना
निर्विण्णा जीवने जीवनेह स्नेहपूर्णया त्वया दुर्लभः पतिरिति
समाश्वासितेव विहङ्गमविशेषैः रुन्धयन्ती मनो निवर्तयन्ती न
गतेः क्रमठपुरस्योत्तरतः परतो जिनायतनात्समया विकटं कर्क-
न्धूकुणमवलोक्य कर्णजाहसेत्याहमनया श्रान्तयाभिधीये। अयि
भव्ये। भव्यमिदं नगरं नगराङ्गितोपशल्यं वर्तते। वर्तसे मृदुरि
तरनारी मतिकुमारीराजमानस्य तदत्र पत्रवहनीये सालसाश्र-
मात् श्रमापनोदाय कानिचिदहानि न हानिरिह लक्ष्यते कापि
वासन इति। अहं तूक्ता सूक्ताभिज्ञयानयोपकूपमनूपदेशविहित-
विमलवेदिकायां धर्ममठिकायां स्थितिमकरवम्।

अथ तत्र तत्रभवति भवतिरस्कारपरवाचो वाचोयुक्तयः
काश्चिन्नगरनार्यस्तथाविधां मामवलोक्य विहितानुचितावधि
विधिं गर्हयन्त्यश्चिखिदुः। अपराः पराचारपरास्त्वेवंविधे रूपे
वयसि चेयं तपःपरेति मां तुष्टुवुः। इतरा नितरामियं युवजन-
हृद्यानवद्याङ्गी वृथा नवं वयो नयतीति निनिन्दुः। अन्या मन्या
महे कन्यासौ धनिकस्य कस्यापि विप्रकृता कृतापचारा वा रूपे-
णातुलाकुलातिमदनेन सदने न तस्थौ। दुर्विज्ञेया गेयानामिव
वा गतिः स्त्रीणां तदियं किं विदधौ विदधाति विधास्यति वेति
मां जहसुः। अन्यतमाः स्त्रीतमा अहो! मनोहरं रूपमस्याः

स्त्रीणामपि मनोहरन्तीति परिवृत्य मुखमूचुः। काश्चिद्गतमतिसन्नद्धा वृद्धा मामर्चयां चक्रुः। अहं तु तासां मनोहरन्ती व्यवहरन्ती यथावयं विज्ञाभावं प्रदर्शयन्ती न दर्शयन्ती निजं भावं त्रिचतुराणि दिनानि तत्र सुखमवसम्।

एकदा तु पुरपुरन्ध्रीभिरनुगम्यमानाममानाश्चजलप्लुततारकामुत्सङ्गनिहितदारकामुदारकान्तिं पुरतः प्रयान्तीं काञ्चिद्वनितामवेक्ष्य केयं क्व यातीति सन्निहितामतिहितां काञ्चिन्नगरनारीमपृच्छम। सा त्ववादीत। इयं खलु राजवल्लभस्य वेगसारस्य पौत्री पुत्री मानशेखरस्य पत्युरकिंचनतया पित्राहृता पूताचारैरेकापत्या पत्या सहैवात्र वसति। अद्य पुनर्दैवहतायाः कस्याश्चिद् दृष्टिदोषाद्बालग्रहावेशाद्वा कफवातपित्तदोषाद्वा प्रतिदिनक्षीयमाणकायकान्तिमर्भकमुपादाय सर्वाङ्गस्य नगरमान्यस्य मदनकण्टकस्य परमतापसस्याश्रममुपयातीति। अहं त्वेतदाकर्ण्य स्त्रीजनसुलभचापलोपहता दैवहतानुमोदितानया जरत्या पत्या सख्या विना सत्याकुला तदुदन्तजिज्ञासया सहैव तया तदन्तिकमगच्छम। स तु गत्वा नत्वा च निषण्णामासन्नां मामाशास्यावलोकयन्नपूर्वां मत्वा ज्ञात्वा च किंचिदुत्सुकां वक्तुं द्रुतमुपलिप्य भस्मनार्भकं शिरसि च शिशोः प्रतप्य फूत्कृत्य च कृतकृत्यो विसर्जितभृत्यो विसृज्य ताः समन्ताः सान्तरमन्तरङ्गानपि नरानपसार्य रहो मामपृच्छत्। कासि कथय कामिनि? कथमसि समागता गता च वेषमिममिति। मया तु सव्रीडया भाणि सर्वज्ञाद्भवतः प्रोषितपतिप्रवृत्तिं जिज्ञासुरिहागता ब्राह्मणी भगवन्नहमस्मीति। अथ दुष्टेन कामदोषैर्जुष्टेन परोपकारैः रुष्टेन पुण्यसंकीर्तनैः पञ्चभिर्महापातकैरेव महाभूतैर्भृष्टजा स न हृष्टेन सहर्षं निरयैरदृष्टेन लोभमोहमदैः पुष्टेन पापभरैस्त ।

मङ्गलैरप्रृष्टेन परलोककभयैर्जनकेन ब्रह्मविद्वेषस्य सहोदरेण पैशुन्यस्य बन्धुना मत्सरस्य मित्रेणासाधुभावस्यामित्रेणार्जवस्यायतनेनासत्यस्य क्षेत्रेणाशुभकर्मणां हेत्वाभासेनेव सव्यभिचारेण सत्प्रतिपक्षेण विरुद्धबाधितेन च समस्तं पदं दूषयताऽविसृष्टविधेयांशेन पददोषेणेव वाक्यदोषेणेव हतवृत्तेन द्विजिह्वेनापि न कुलप्रियेण अवर्णमयेनापि वर्णसङ्करेण अलक्षणोपपन्नेनापि गणेन असत्क्रियेण पतितेन उपसर्गसमानाकारेणानुत्तमपदेन प्रत्ययविधिबहिष्कृतेन यावदायुरगुणेन अनुशासनविरुद्धभावेन सुकृतप्रागभावमयेन सौजन्यप्रध्वंसाभावमयेन परोपकारात्यन्ताभावमयेन पिशाचेन न पुण्यजनेनेत्यन्योन्याभावविपर्ययेणेत्येवं सर्वाभावमयेनापि भावेन मूर्तेनाधर्मेण धूर्तेन तेन लुप्तधर्माणं तिमिरोपमामिव षष्ठीमिवानिर्द्धारितसम्बन्धविशेषामपि न स्थाने योगां लक्षणामिव सान्तरार्थविषयां चित्तवृत्तिमास्थाय कामसान्त्वनानि कुर्वन्ताहमस्यां धीये ! अयि कमिनि ! कामिनितान्तकान्ते कृतकान्ते कान्ते गतिमुपदिशामि । दिनान्तेनान्तेवासिनं किं कुरुते पुरुषेतरं मदनविलसितानाम । केन पुण्यैन रञ्जितेन कलयामि काममन्येन अये मनोज्ञे मनोऽज्ञेन केन ते पीडितम ? विज्ञेऽविज्ञे का प्रीतिमृग्यते हि रत्नं न मार्गयते तदमृतमधुरस्वरे स्वरेहि मे कुरु भवनम ।

प्रशमय सुन्दरवदने मदनेहितानि दुःखानि ।
मदयति कमिव न सुन्दरि ! सुन्दरिपोरिव तव परं रूपम् ॥
रूपोपजनितमदने मदनेकसुखानि सङ्कल्पय !
गुणगणकलितानुदरानुदरागवशस्य हेदं मे ॥
चटुसदने मम वदने वद नेत्रतरङ्गितं न तनुषे किम ?
मदयद्हृदयतावलिते ललितेक्षणविभ्रमं वितर ॥

गुणसहिते जनमहिते नहि ते मम वर्तसे किमिति ।
पश्यसि यमिह सदलकेऽलकेश्वरः किं ततोऽपि सुखी ॥
अविरामनमामतिरम्भेऽरम्भदं याति हृदयं मे ।
कलय ममाखिलकरुणान्यतरणाश्रय रूपस्येति ॥

अथ मसंभ्रमया मयाभाणि । अहो! महातपस्विनोऽपि मानसं मोहमदमदनैर्विक्रियते ? विकृते च मानसे सर्वस्य सञ्जातप्रकृतिलोपं दूरमिवोद्भूतसन्निकर्षार्थं ज्ञानमुल्लसति । ततः प्रदोषजन्यमपरममुद्भवति तिमिरम् येनामूलापि मतिरुपहता सद्वस्तु नावलोकयति असदवलोकयति सर्वं च यस्याः सज्जनधनमिव विप्रलभ्यमेव भवति तथाविधा च शरत्सरसीव पङ्कवती कमलङ्करोति रञ्जयति वा कम् ? चक्षुषा च दत्तोपचक्षुषेव लघवो गुरव इव लक्ष्यन्ते तिमिरोपहतेनेव लघवो गुरव इव लक्ष्यन्ते तिमिरोपहतेनेव लघ्वन्ते इव दृश्यन्ते । समुद्भूतप्रभूतमहमहमिकाभूतमिव श्रुतं पलायते दानशौण्ड इव विवेकः सन्निधिमप्युज्झति, प्रसरदप्रबोधमहान्धकारः सारासारमिवाधीतं तिरोभवति सञ्जातप्रबलप्रमादगलहस्तितमिव धैर्यमपयाति, बलवदविवेकोपरुद्धद्वार इव नान्यः प्रविशत्युपदेशः, संभूतपरुषवचनकण्टकोपहतचरणयेव हृदये न निधीयते पदं क्षान्त्या वाचापि पार्थशरजालानीव विहितकरणोपतापिनि दुर्योधनचरितानीव दुःशासनाधिकारमलिनानि चक्राङ्गकुलानीव स्वार्थसंक्षोभितमानसानि, अव्ययानीव विघटितपरप्रत्ययानि, अनेकवर्णमयान्यपि अवर्णमात्रोद्भावनकुशलानि व्यक्तान्येकविमलपदान्यप्यकलितसाधुगतीनि स्वार्थजनितचतुरागनिद्रावृत्तीन्यप्यकलितचित्ताभङ्गानि दुर्गतान्यप्यर्थवन्ति लक्षणाश्रितान्यपि विलक्षणानि अतिगुरूण्यपि लघूनि वाक्यानि प्रकटीक्रियन्ते, भवति चात्र जनानां प्रत्ययानामिव स्वार्थिकानां प्रकृ-

त्तितो वचनव्यतिक्रमः भवति चात्र प्रायशो विपरीतविधिः।
तथाहि—सम्बुद्धिर्ह्रस्वस्य गुणमेव संपादयति, ह्रस्वस्तु गुणमा
पन्नो सम्बुद्धिं लोपयति, विरहा सह प्रकृतिः परमेव प्रत्ययं विद
धाति, संजातपरत्ययस्तु गुणीभूततदर्थं स्वार्थसम्पादनम् . [illegible]
स्थानं प्रपन्नो जायमानः स्वपरगतमपि परमिवापरमपि [illegible]
ति नहि वचनमिदमनुरूपं गुरूपदेशस्य, उपदेशः किलात्याप्तावि
षयोऽलक्षणसम्पन्नमपि लक्षणसम्पन्नं वर्णविधिविषयं करोति
इत्यनन्तगुण एव, गुण एव वा कर्वाचिदगुणवृद्धिहेतुः किं चयेषा
मनुशासनेष्वव्यागमानां गुणीभावः, द्वेषा धर्मयोरपि गुणेषु
व्यस्तवथापनम्। लाघवस्यादरो गौरवस्यावहेलनम गुणवृद्धिप्रति
षेधविधिः। सुहृदः श्रोत्रियस्य च निपातनम् आपस्यस्यापि प्रत्य
यस्य लोपविधिः विशिष्टानां वृत्तिप्रतिषेधोक्तौ द्वन्द्वव्यवस्थाप-
नम् वृद्धिमान्द्यसिद्धये प्रतिषिद्धवृत्तिस्वीकरणम् आदेशविधाव
मित्रणोचितस्य विद्यमानस्यापि पूर्वस्याविद्यमानवद्भावव्यव
स्थापनम् पदादिभावमापन्नस्यापि अधिगतद्विजाश्पदतया लस
मानस्यापि मूर्द्धन्यभावप्रतिषेधविधिः, विसर्गस्य लोपोपदेशः
विग्रहेण वृत्त्यर्थाधिगमः आदेशविधौ गुरोर्गरोपलम्भनम् स्वार्थ
परस्य प्राधान्यम् न परार्थपरस्य, अनाख्यातेन पराख्यातनि
हननम् अप्रत्ययेय सत्पथसाधनम आमन्त्रितस्य सर्वस्य निहन
नम् तेषां किं साम्प्रतम् यन्नाचरेयुः, किमवाच्यं यन्न ब्रूयुरिति।
सतु सोपहासमेवमुक्तो मुक्तोऽतिसहृदवभावेन युक्तो मदनविकारै
र्मदशमशान्तिपराजयजायमानपरमहर्षप्रकर्षलसदमर्षवर्षधरसा-
भिमानवाध्यमानचित्प्रवेशमुह्यमानमानसो मामतर्जयत्। अयि
पिशुने वनशुनीव परपुत्रादिनीरूपेणोत्तमेन वंचयन्ती जनं डाकि
नी प्रचरसि। दुष्ट्या मानशेखरस्य दौहित्रमपहृत्य क्व यास्य-
सि तिष्ठेदानीं नयामि त्वां कारागारबन्धनव्यथामन्ते च शूर्पण

खाव्यवस्थाम् इति । अहं तु तत्रत्यजनाविज्ञातकुलशीलाचारा विहितविचारा भीता नीता तेन नगरमान्येन तथाविधतीव्रवेदना विधिसम्भावनां पापपादपपरमूलं प्रतिकूलं तमनुकूलयन्ती स्मिता पुनरवोचम् भगवन् किमयं तथ्यो मदनविकारो नहि भवादृशस्य पुरुषवरस्य वशिष्ठादवरिष्ठस्य वराकयां मयि सम्भवति मनोभवविकार इति सन्दिहानयाऽनया कामखिद्यमानयापि स्वानुरागमपह्नुवानया तथाभिहितम् । नहि तं पश्यामि न हितं सुरतसुखं यस्य लोकेऽस्मिन्नपि तु समयपरीक्षणमुचितं विशेषतस्त्वशेषजनविशेषमानस्य तदिदानीं सर्वतो जायमानलोकप्रचारं प्रतिषिद्धपुरताचारं च दिवसशेषं च प्रतीक्षतां लब्धास्पदो भवान् । वितते त्वन्धतमसे स्त्रीवेषेणापनीतमन्मातृशंको निःशङ्कः शिष्यवर्गात्सवञ्चितो मया न्यसमठिकायामालिङ्गितः सकामया मयापनुदतु मदनखेदमिति । स तु सप्रणयं मयैवमुक्तो मुक्तोरुहठः शठो मठोत्तरतो रतोत्सुकोऽपि कोपितोयमायातीति जनारवं समाकर्ण्य चातिचकितो विततोरुनिःश्वासः सविश्वासमाश्वास्य मां समाज्ञापयाञ्चक्रे । अहं तु सविश्रम्भं तेनानुमता गता स्वमाश्रमं देवतावलोकनमिषेण मदवलोकनाय नित्यं सायमागच्छतो नगरविटानागतानवलोक्य योषिद्गमभिनयन्ती पृष्टा तैरुद्वेगकारणमवोचम् । इहैषु दिवसेषु स्त्रीवेषधारी कश्चनागत्य नक्तं प्रियवचनैरसुभिश्च मामपलालयति न चाचरत्यनिच्छन्त्यां मयि मातृसन्निधेर्बलात्कारम् । तदतिदुष्करोऽत्र निवास इति । ते तु विस्मेराः स्मेरानना मामवदन् आर्ये भीरु ! तमुपदर्शय यथा निगृह्णीमो वयमिति । मयापि तु प्रहृष्टरूपयावाचि इहोपकुञ्जनिलीनैर्भवद्भिर्निवेदिते तस्मिंस्तथाचरणीयमिति । तेऽपि तथाऽऽचरन् । यथोद्दिष्टसमयसमागतं तं समुत्सुकं चन्दनमृगमदव्याजेन सिन्दूराञ्जनाभ्यामन्धकारे समुपलिप्य कुचग्रहणाय प्रसारितकरं

सकरग्रहं ज्ञेया जननी स्वपिति जागर्ति वेति शनैरभिधाय गत्वा तन्यत्रोदयम । तेन परुध्य द्वारं वारंवारमाहूतमपि नाविर्भूतं समादाय विहितविविधताडना निगडितबाहुयुगलमारक्षिकनायकान्तिकमुपानैषुः । तत्र च प्रज्वलत्स्वपि प्रदीपेष्वनिर्णीतस्वरूपं तथाविधं तमःलोक्य सहेतरैस्ते जहसुः । प्रातश्च विज्ञा विज्ञाय विज्ञाप्य राजानं जानन्तं तमतितापमं तापसविग्नमानसं तापसं न मुमुचुः । स तूपहसितो नगरनारीभिः सर्वतश्च सर्वलोकैस्तं देशमजाहत ।

अथाहं तदुदन्तदर्शनविस्मितेन सस्मितेन विहितमद्विरहशोकेन च लोकेन नगरस्य सादरमस्मभिवन्दिताभिनन्दिता च प्रस्थिता स्थिताभिरग्रतः प्रमदाभिः प्रमदाभिग्राहितफलानलाभिधानलापिनीविनीताभिस्ताभिरनुशिष्टा शिष्टाभिश्च सुमनोभिः सुमनोभिरर्चिता पुरात्तो निरगाम । ततश्च किञ्चिदिव गत्वा मत्वा चाश्वर्यानर्हं स्त्रीवेषं पुंवेषं विधाय प्रचलिता ललितारण्यविहगकूजितानि समाकर्णयन्ती तद्विविधवार्तामार्ता पथि भ्रान्ता समभवम ततः श्रान्तापि कथमिह बाला वससी-ति कोपादिव लोहितायति विवस्वति चलितपल्लवकरे करुणा-करे वाचालशुकशारिकानने वारयतीव काननेऽनासादितनगरा नगराजिभीषणे मृगविहगशरण्येऽरण्ये सहानया न्यवसम । अथ संवेशाय विहितमतिर्नातिरिह विधातुरुचितेति मनसि कृत्य कृत्यविज्ञा विज्ञापनाय विधाय ललितमञ्जलिं यासौ वनदेवता वृक्षदेवता चोत्त क्षोभेणाकुलाया लोभेन वल्लभस्य प्रस्थितायाः पथि सतीनामिहोचितायां भयङ्करेऽरण्ये शरण्ये स्यातामित्या-भिधायोपधाय वामभुजं किञ्चिदिव सुप्ता लुप्तालस्य शय्यातिरस्नेहसम्पत्योर्दम्पत्योः कयोश्चित परस्परालापमशृणवम । अये नाथ ! कथय कथमसि विलम्बित इति पृष्टो हृष्टान्तां कश्चन प्रत्य

वदत अयि सुन्दरि ! रतायां त्वयि वनदेवतापादसंवाहानाय त्वदाननानवलोकविलोको मनोविनोदनाय नगरमहमगच्छम । तत्र च राजचन्द्रसेनस्य पादसंवाहिन्याःतवेव पूर्ववाग्व्यजनवाहिन्याश्चोत्तरकायां ताम्बूलकरण्डवाहिन्याश्च मुखरागमवलोक्यो न्मनायमानः क्षणमास्म । अथ दैवात्तदैवाकुले कुले पानगार्थयन्त्या शिरोर्त्या राजाननां जनिजनानां विकलतया तदवलोकसुखलोभोपीत्यविकलो लोकितुं च तमक्षमो रुजार्तं राजानं जानन्नपि तदपहारप्रकारं कथङ्कारमपनुदेयमिति प्रतिपाद मूढो गूढोपसृत्य ततो भजन्नेव वने सरोवरमपश्यम् । तत्र च विमलकमलेषु वदनकान्ति नीलोत्पलदलेषु नयनकान्ति चक्रवाकमिथुनेषु स्तनकान्ति हंसीषु पूजिते गतिकूजिते तव विन्दन् विलम्बमानो नाज्ञासिषं गतमशेषं दिवसशेषम् । संप्रत्येतयोपेतयारण्यानीमभिवन्दिता शरण्याऽरण्यदेवता सुभद्रेण भृत्येनाहुय मामुक्तवती नियुक्तवती च पथि भ्रान्ता श्रान्ता काचित्तव कान्ता कान्तार्थिनी शरणमुपेत्य मामिह रसालतरोरधो वसति । तदद्य तां निपद्यतां तामुपमूलं पूर्णमितो नियुक्त या तं देशमितया वनितया सह रक्षसावधानो दधानः परमायुधमिति । अहं तु तदादेशश्रवणसञ्जातसम्मदो वशंवदस्तवोपलोकनाय सत्वरमुपागतोस्मीति । अथ सा दयमाना पुनस्तमपृच्छत् । अयि जानासि यदि कथम किमिह शिरोर्तेर्निदानं समाधानं चेति सोऽब्रूत । अथे कालिकेन शाकुनिकेन च गुरूपदिष्टेन ज्ञानेन जाने किं नाहमज्ञाने यथा खेद ते मानसम्मानसम्वलितम् । त्वमिव नास्मि साङ्कागतापि मे न जानासि कामजं कामपि खेदनाम् । शृणु भद्रे! मृगयां गतस्य श्रमाद् भूमावेव प्रसुप्तस्य राज्ञः श्रवणविवरेण प्रविष्टाऽनेकीभूतां शतपदकेह निदानम् । कोष्णगव्यघृतेनोपलिप्य शिरः परिवेष्टयोर्णायुना वसनेन मुहुर्त मातपावस्थानमिह समाधानमिति ।

सा तु विहस्य परांगनाननावलोकनरतस्य विकरुणस्य ते कित-वस्य कथमर्तिरित्यभिधाय पुनर्मामुपदिश्य तमपृच्छत् कथय केयं का चास्या गतिरिति। स तु शकुनैरवगतनैङ्गितेन च जाने यात्य-मन्या वन्याशिनी सन्यासिनीसमा धन्या कन्या विप्रस्य कापी-यं पापीयसीमापदं प्राप्तापि परिणीता सती दृढव्रता पतिव्रता भवति पुंवेषा चैषा देवकन्यासमानाऽस्मान्नातिरोषितं मन्दमतिं पतिं गवेषयति। प्राप्तविशाला च बालासौ कालानतिपातेन पतिं प्राप्य मोदिष्यत इति तां प्रत्यवोचत्। सा त्वहो स्त्रीणां पतिषु वात्सल्यं कामिनां तु नितान्तकठिनानि निजाङ्गनासु भवन्ति हृद-यानि सदयानि तु परवनितास्विति विहस्य तमवोचत्। स तूभाव-पि करौ तत्कुचयोर्निधाय पुनरवोचत्। अयि सुन्दरि भवत्येवम-न्येषामहं तु सुवृत्ताभ्यां स्वयम्भूभ्यां तवाभ्यां स्तनाभ्यामेव शये। यदि कामये मनसापि त्वदन्यां सुकन्यामिव भासमाना राजक-न्यामपि न मन्ये वा भद्रकन्ये नवामुनालिङ्गनसुखेन तृणाय विबुध-पतिमिति। अहं तु तत्कथाश्रवणसञ्जातमन्मथा सुकथान्तःकरणा अपि राजकार्यमस्तकव्यथापनोदनाददूर्ध्वदया विशेषतः सदया प्रियप्राप्तिपिशुनया शकुनकथाश्रवणसञ्जातपरमहर्षप्रकर्षमुद्रानि-द्राच्छेदस्थली निशाशेषमनैषम्।

अथोद्गमाने दयमान इव निरस्ताशेषमन्तमसे तमसेऽर्क-जनानामरण्यदेशं विमलयति भगवति विवस्वति समुत्थाय नग-रमहमगच्छम्। तत्र च शिरोऽर्तिं राज्ञस्तथोपशमय्य राजदीयमान-धनालंकारवसननगरादि चाप्रतिगृह्य समाश्वास्य च राजानं जा-नन्तं मां देवकुमारं पुनरागमनशपथशतैरनतिपातितकाला वि-शालाभिमुखी सहानयोदचलम्। अथ प्रस्फुरतावामेनामुना बाहुना नयनेन च सदा सीदता चाधुना प्रसीदता चेतसा चोपसूचितशुभां शुभाङ्गीमिहावलोक्यैव भवतीं समीहितं मन्ये सिद्धमिति। अहं

तूभयोक्तिलब्धसंवादाऽविवादा तां तदीयां पत्नीं विज्ञायोत्थाय सस्नेहं पुनः पुनरालिङ्ग्यावोचम्—अयि सुभगे ! वर्तते पतिरत्र ते वेषान्तरेणाच्छन्नः प्रच्छन्नमिति । सा तु सहर्षोत्थाय निपत्य मे पादयोरब्रवीत् क्वेति । ततः सहर्षा विहितप्रमोदजलवर्षा समादाय तां प्रदाय ताम्बूलं तदन्तिकमगच्छम् गत्वा च सह तया प्रणम्यावोचम्—किमियमाकृतिः । कृतिना कचिदवलोकिता न वेति स तु तां चिन्तयमान एव तथोक्तो झटिति जातप्रत्यभिज्ञो विस्मितः सस्मितमवलोक्य तां किञ्चिदिव विलक्षो दशोचितमभिनयाञ्चक्रे । पुनरनुयुक्तश्च मया प्रपदादाकेशं विनिरूप्य तां हृदचरी किन्त्विति सशेषं सहर्षं गद्गदमभवत । सापि तदाननादवलोकसंभूतप्रभूतहर्षाश्रुजलानुमीयमानप्रत्यभिज्ञा विज्ञा वाक्यशेषस्याशेषावयलब्धसंवादापि वेषविसम्वादात् किञ्चिदिव संकुचन्ती मामपश्यत् । अथाहं विहस्यापाश्य तस्याः पुंवेषमवादिषम् । सहजानन्दस्य नन्दना सुनन्देयं नन्देय सह पत्येति पुंवेषा गवेषयन्ती, त्वां मदुक्तवृत्ता सुवृत्ता समासाद्य वेषविसम्वादजनितभ्रमं ससंभ्रमं पश्यति तदपास्य महास्याः संशयेन यनिर्देषं निर्विशेषं मुक्तेः सुखविशेषं सविशेष महानया भवान् निर्विशत्विति । ततः तौ दम्पती सहर्षमती परस्परालापलब्धसम्वादौ परस्परापराधपङ्कमार्जनायेव स्वेदोदकेन सस्नतुः । पूर्ववेषविशम्वादाद्रोमे दुगमेनालिङ्गने सान्तरावित्र परम्परापराधमानिनौकम्पेन स्पर्शप्रतिषेधपराविव प्रभूतेन संभूतेनाश्रुजलेनपरस्परावलोकविरहसंन्तापं नयनयोर्निर्वापयन्ताविव प्रस्नुतजलाभ्यां नयनकमलाभ्यां समागतानन्दाय दीयमानपाद्याविव बभूवतुः । मनमी तु तयोर्विहितागसी सति संगमे व्रीडयैवानन्दार्णवे ममज्जतुरिति प्रतिपत्तिमूढावपि क्षणमभूताम् । अथ तौ विदितौ चन्द्रसेनकृतमाननौ शुभाननौ तदीयाननां सुखमूषतुः । अथाहं प्रीताभ्यां ताभ्यां प्रहर्षोत्फुल्लवदनया म-

दनया च शुभैराभरणैर्वासोभिश्चानेकैः समर्चितार्थिता च पुन-
रागमनाय गृहाय प्रचलिता ललिताट्टालकवलभीमुखं वलभीपुर-
मुपेत्योपकूपं वटतरोः प्रच्छायशीतले तले निषण्णा सनाभिराम-
राजभवना भवनामजपन्ती स्नानार्थनिर्गताभिर्ज्ञातान्यविषया भव-
न्ती सौधगतया राज्ञ्या समदर्शि । सा तु दासीभिस्तामाहूयोपह्वरे
समुपवेश्यासने मद्वृत्तान्तमापृच्छ्य च स्वाभिलषितं व्याहृतवती ।
आर्ये ! जानासि कमपि दौर्भाग्योच्छ्वासनप्रकारमिति । मया त्वयि
तन्नाहमीक्षे समीक्ष्यापि दौर्भाग्यचिह्नलेशमपीत्यभिहिता स्व-
हितामाप्तामिव मां मन्यमाना चिन्त्यमानातिदैन्या पर्यश्रुरवो-
चत् भगवति ! मम पतिरवनिपतिः सरसर्गानिरतो गतो मृगयां
दमनकस्य महर्षेरसौ वराश्रमे विमलकमलपत्रसमानलोच-
नां सुलोचनां नाम कन्यकामवलोक्य चकमे । तमेकरसं मुनिरव-
लोक्य कन्यकायां कदलीवने तदुपलब्धिमाख्याय कामयमानाय
तां राज्ञे प्रददौ । राजा तु तदासक्तचेता वेतालाविष्ट इव न मां स्मरति
किं बहुना राजकार्यमपि न चिन्तयति न चान्यैः कथ्यमानं शृणो-
ति तदस्यां व्युदस्याङ्गनाया अनुरागमनुगृह्य यत् मामसौ परमसौ-
हार्देन तथा मतिमत्या भगवत्या घटनीयं पुनरटनीयं न यथा
त्वया तथा मया वस्तु वितरणीयमिति । अहं तु किञ्चिदिव वि-
चार्य प्रत्यवादिषम् । राज्ञि ! राज्ञि जातेऽन्यत्र संबन्धे क्वेह खेदे
किमवशिष्टम् ? दिष्टं तु तव विशिष्टं यदिहाहमागता मता च
परमसख्यम् । तदाशु समाचारविचारान्मदुपदिष्टम् । कांचिदा-
प्ता नाप्ताविज्ञा विज्ञा तव दारा वशीकृत्य नगरबहिरङ्गान्यलक्षिता
रक्षितात्मकृत्यमन्त्राऽस्वतन्त्रा मदुपभवनं प्रविशतु । मयि चा-
ज्ञातपरिचयेव स्थवत्या भवत्या भावितव्यं निवेदितव्यं चान्यमु-
खेन सर्वज्ञत्वं मम तपोबलं चेति । सा तु तथाकरोत् । अहमपि
महेश्वरमठोपकण्ठं कुत्रस्थनिःस्वविश्वासमाचरन्ती यावज्जन-

समागमं दर्शनोत्कण्ठितकन्धरा जपन्ती दैवतमर्चयन्ती नागरिको-द्गीयमानतपःप्रभावा नरास्थिशकलकीर्णसदनपरिसरे समागत्य राज्ञाभ्यधीये। भगवति ! भवनपरिसरं परितो मम नरास्थि-विपुलखण्डानि प्रतिदिनमवलोक्यन्ते। प्रसीद ! कथय किमेत-दिति। अहं तूत्तम्भितकन्धरं किञ्चिदिव ध्यात्वाभिनीतज्ञानसंनि-धिरेकान्ते समुपवेश्य राजानमब्रवम्। राजन्नवाच्यमपीदं श्रीमदु-पकाराय वाच्यमेव भवति। मयाऽप्यनुद्भावितविकारेण निवे-दितमिदमनुष्ठेयम्। सुलोचनानाम्नेयं कदलीवनसम्भवा जनता-श्चर्यायोत्तमरूपशालिनी शाकिनी भवति। भवता च भवता रूप-वशेनाविज्ञातकुलशीलाचाराऽविचारात्समूढा तदूढामपि मूढा-मिमां वनविहरणव्याजेन महर्षेराश्रमं प्रापय्य त्यजेर्यदीच्छस्या-त्मनः प्रजानां च हितमिति। स तु तथाकरोत्। राजमहिषी तु प्रीता क्रीता मयोपकारेण खेदादीना नीता परमसौभाग्यं भूपे-नात्मनः समौक्तिकमालमाभरणजालमतिप्रणयेन मे प्रादात्। अथ तदादाय गृहाय प्रचलिता कालिन्दानन्तदेवसङ्कमठपुरस्या-न्तरतः पत्नी राजगृहादशोकतरोश्छायायां पादचारक्लिन्नाश्रमादुप-विष्टा कमप्युद्विग्नवर्णं भुवं विलिखन्तमधोमुखपुरुषमद्राक्षमप्रा-क्षञ्च। कोऽसि कथय किमिव भुवं विलिखसि ? कथं वृतासि म्ला-नतिविमलमुखवर्ण इति सोऽब्रवीत्।

अहमस्मि नापितो राजसेवी विमर्दो नाम। दुर्मदो नामेह-त्यो नित्योन्मत्तनयो राजा पितर्युपरते रतेरपि समां वनिता-मुपेक्ष्य यदृच्छया विहरन् भ्रमन् इतस्ततो राजावलोकनकौतुका-दुत्सारितावगुण्ठनपटामचिरोढां पत्नीं ममावलोक्य विज्ञाय च मदीयां किमयं करिष्यतीत्यवहेलया समदनः सदनमुपेत्य मे तां बुभुजे, भुङ्क्ते चाधुनापि। सापि राजसंसर्गवशाद्विलोकयत्यपि न मां, न मांसला वा गर्वेण करोति दुष्टा स्वकं कर्म। तदहं का

यं राजकार्यं गृहकार्यं चानुतिष्ठन्नहरहराकुलः किंकर्तव्यतामूढो-
ऽनूढो भवन्नूढोऽपि राज्ञश्च किञ्चिदपकर्तुमक्षमः पितृपैतामहतया
हतया तयावधूतश्च नित्यमुद्विग्नो गृहादिहागत्य गत्यभावविकलो-
ऽनवलोकितान्यमुखोऽधोमुखः स्वल्पावसरप्रतीक्षया भुवं वि-
लिखामीति । तदेतदाकर्ण्य दयमानया किञ्चित्स्मयमानया च
मयाऽभ्यधायि ।

अयि किम्भद ! प्रभाषसि किमिह नु विषये । विषयेषु
निहितचेतसां वनितामुखानि हि सुखानि तदाचर कमपि विधिं
विहितो सन्तारयेद्विपद इति । स त्वब्रवीत् । अस्त्यपि कश्चनैवंवि-
धोऽपि विधिर्विहितो य इमां महापदं समापनयेन्नयेत मां पुनरपि
सुखमिति । अथ मयोक्तं सति बुद्धिवैभवे कथं नास्ति । सोऽब्रूत
यद्यस्ति प्रसीद ब्रूहि भगवति ! समाचरेयं धनेन जीवितेन चेति ।
अथाहं तमाहूय रहस्यमशिक्षयम् । त्वमद्य क्षामक्षामो विवर्णश्च
भूत्वा राजानमुपतिष्ठस्व । पृष्टश्च तेन कार्श्यवैवर्ण्यकारणं ब्रूहि
राजन् किं ब्रवीमि स्वपतो मम पत्नी मम गुह्यभागे पाणिं विनि-
धाय रन्ध्रेभ्यः शरीरसारमाकृष्यान्वहं पिबति । तेनास्मि क्षामो
विवर्णश्चेति । गृहागतश्च विवर्णः प्ररुदन् भार्यया तत्कारणं पृष्टो
ब्रूहि भद्रे ! किं ब्रवीमि राज्ञोऽस्य गुह्यभागेऽदृष्टस्येच्छया वा क-
स्याचिद्देषु दिवसेषु वज्रमय्य इव जरठाः शलाकाः समुत्पद्यन्ते ।
ताश्छिन्दतो मम क्षुराः कुण्ठायन्ते मांसच्छेदभयात् करश्च मम
द्यते । स्वल्पयापि पीडया कुप्यति राजा व्यङ्कारश्च प्रतिदिन-
मुत्तेजनाय नियुक्तो मामाक्रोशति न वाचरामि राज्ञः प्रतिपधात्त-
न्निवेदनम् । तदेवमापन्नः किं करोमि क यामि इति । स तु मद-
नुशिष्टः स्वयं च मतिविशिष्टो राज्ञा पत्न्या च पृष्टः सविशेषं
तथैवाबोधयत् । राजा तु तदीयपत्न्या सह विहृत्य साराकर्षणप्रका-
रजिज्ञासया व्याजसुप्तस्तत्पत्न्या शलाकाजिज्ञासया गुह्यभागे

प्रसारितकरमुपरुध्योत्थाय शाकिनी विभीता भूत्वा तां तद्दिनादज-
हात्। नापितस्तु सिद्धसमीहितो वसुभिर्वसनैरलङ्करणैश्च हर्षकर-
णैरनेकैर्मामपूपुजत्। सापि राजावहेलनादपगतगर्वा सर्वानपि
यथायथमुपचचार ततस्ततोऽपि समेतसार्था पार्थाभिधानजायिनी
विनीलवस्त्रवासिनी सुवासिनी सेषा सर्वेषामप्रतीपा नीपावलीम-
ध्यभागतो वासके धनावटं नामतो महावटं वाटमपहाय दक्षिणतो
व्रजन्ती जयन्तीपुराभिमुखेन सुखेन पथा यथासुखं सुखायमाना
समानाकृतिं तत्रावलोक्य स्त्रियं प्रियश्रियं काञ्चित् प्रणयेनोपचरं
ती श्रान्तां ताम्बूलं वितरन्ती चरन्ती तच्छायावलम्बिनी विनीतया
तया सह कथां कुर्वाणा दूरं गता गतायामथ तस्यां तदान्यतो व्यदा
न्वस्तो यथाभिधाद्धनाशयाऽऽविलाशयाहमकरग्रांशत्तिकरुतं द्रुतं
फलं वदन्ती मदन्तिकमभ्यजन्ती मिमांसी प्रतितरुणखरकिरणा-
किरणसंजातसंतापसन्तान्ता स्वतःवेदविन्दुकलितालकान्ता परि-
श्रान्ता पिपासुरशोकवनीसनीडे विकचविमलकमलेन विमलेन
जलेन पूर्णामधिगत्य वापीमापीतजला वापीतटोपकण्टवटोरुच्छा
यायां विशिश्रमिषुरुपाविशम्। अथ गतश्रमा ससंभ्रमा भ्रमन्ती
वापीरामणीयकं विलोकयन्ती वापीपश्चिमतटे कटे निषण्णं कि-
मपि विचारयन्तं चारयन्तं मुहुर्मुहुर्महिशा दृशं भृशं विनिःश्वस-
न्तं च वचनपटुं वृद्धवटुमपश्यम्। ततस्तत्तो गत्वा नत्वा च तम-
पृच्छम्—को हि भवान् कुतस्त्यः कुत इह विषीदतीति सोऽब्रूत।
अहमस्मि बाले बलिन्द्रपुरवासी शालेयोपहारी विशाले वत्स-
गोत्रे लब्धजन्मा सन्मार्गरतोऽपि दैवहीनो दीनो ज्ञातीनो भाग्येन
भोगेन विहीनो धनिकैकवशंवदः शम्बदो नाम विप्रो विप्रोषितश्च
शयावलम्बितशम्बलः कम्बलोत्तरीयो नु कामिनो मीनोरुकबल-
संभृतमुखानवलोक्य वकान् ससम्मदो मदोत्तमर्दिहगरबानाक-
र्ण्य चोन्मनायमानो विमनोढ इव दुःखं व्रजन् वासरैः पञ्चभिर्-

धिकधनिकचक्रामेकचक्रां गतः पठन्नितस्ततो भिक्षामटन्नेकदा धनिकस्यातिपिशुनस्य नाम्ना शुनकस्य द्वारि वारितोऽप्युपाविशम्। तत्र गृह सहचरैर्जायमानासु सुवार्तासु वार्तासु प्रवृत्तो विवाहप्रसंगेऽनङ्गेन मूढोऽनूढः शुनको मां मदीयदेशवार्तां सवार्तानुयोगमपृच्छत्। मयाप्यनुमाय तदाशयं विज्ञाय तस्मै विज्ञापयता सवार्तां निजदेशवार्तां निजदेशीयमुपयमनसौलभ्यमलभ्यघटनसामर्थ्यं चात्मीयमवाचि स तु मना मनागपि विलम्बमसहमानो वयोविरुद्धं सख्यमुपदर्शयन्नवोचत्—अहमपि मित्रगोत्रेण मायां गर्गगौतमिकया व्यवहरतां मम पूर्वेषां कोपि कुलवृद्धः समृद्धां धनैः परिणीय गौतमीमपहाय तां कपटपाटवशालिन्यां शैलालिन्यां समासजत्। ततः काकोलूकिकायामिव प्रवृत्तायां गर्गगौतमिकायामुपयमनदौर्लभ्यमभूत्। तत् प्रसीद साधय मम विवाहमिति। ततोऽहमवादिषम्।

अयि सखे! सखेदोऽहमखेदोऽवित्तजनवित्तसाध्यमिदं खलु विधेयं तदद्य हन्त महतां न हितां मदनदशाकालासहतां सहतां भवान् कमपि कालं यावदर्थं तावत्समर्थं संपादयामि यामि साधयामि धन्यया वयापि कन्यया तव विवाहमिति। स तु मां मत्वाशीतकं शीतकम्पितं च वसनेनावेष्ट्य संभोज्य च पायसं कवोष्णमुष्णकः पुनरवोचत्।

सखे! स खेदयसि किञ्चित्तां वित्तं हिममहीयो न हीयते दीयमानं तदेतदद्य सद्य एव साधयसि यदि विवाहं तथा ददामि ते विंशतिपञ्चशतीमिति ततस्तथाभिधाय किञ्चिदपि प्रदाय मामितः प्रास्थापयत् अहं तु तदर्थं विशोधनः क्वार्थं भ्रमन् इतस्ततो भवादृशीं तदनुगुणां कन्यामलभमानः वाराणसीगतपतितधनव्यथामसहमानः कश्मलं विन्दामि, निन्दामि चात्मनो दैवमिति। अथाहं किञ्चिदिव विमृश्य स्वार्थेन तदर्थमपि सार्थयन्ती तम-

वादिषम् । शम्बर ! सिद्धप्रायस्त्वायमर्थो व्यर्थं विषीदसि इति । सोऽब्रूत । कथमिति । अथ मयोक्तम् । ममाद्य जनकः कनकोटि-स्वपरमतृष्णः परमकृपणो नाम सामगोऽसगोत्रजमवासी वृद्धो न धनसमृद्धो गोत्रेण वा तस्यः शुल्केन मां प्रवराय वराय प्रदाय तीर्थानि सिषेविषते । त्वया च विज्ञाप्यस्तदनुमोदितेन भवता भवतापमपहाय समानीताय स्वसदनं मतोद्वहनाय कतिपया-नुचराय वराय शीलेन जयन्तीं जयन्तीमधिवसन्तीं मां प्रदद्यं साहस्राय शतिकाय पंचकाय वा मे जनकाय शुल्कं प्रदायोपादाय चात्मीयं प्रस्थाप्य च मां भवनाय गन्तव्यमिति सिद्धस्तवार्थ इति । स तु मदुपदिष्टवृद्धलब्धसाहस्रविवाहविविधसम्भृतिर्विप्रः क्षिप्रं तथा तदखिलमतनोत् । अहं तु नातिविशदलक्ष्यमाणालोकमुखे दिवसमुखे तदुपनीतवरमनुपीताम्बरसम्वीतां सन्ततमेतां कृतसं-केतां जरतीमतीवसुप्रीतां वसनसमावृत्तिमहितायां शिबिकायां समुपावेशयम् । इयमपि मदुपदिष्टा स्वयं च मतिविशिष्टा वि-पुलनिचुलकुञ्जं कूजद्विहंगपुञ्जविधूनविकाशसुभगकाशसवदुकूलं स्वविधेयसमनुकूलं जाह्नवीकूलं समुपेत्य शनैर्जन्यजनम् ईदृत् । तावदिहास्यतां प्रच्छन्नैर्यावदावरामि शौचमहमिति । ततः प्रच्छ-न्नेषु तेषूत्तार्य किञ्चिदिव गत्वा नत्वा गंगामंगादुत्तार्य तद्दुकूलमुप-कूलं विनिधायेमं नातिसन्निहितं मतिमहितं विमलपुलिनमधिश-य्य पत्रोर्णवासिनी शंखचक्राङ्कधारिणी चारुदारुभारभालभारि-णी विमलकमलबीजमालामावर्तयन्ती कुशासनोपविष्टा निष्ठा-वती तस्थौ । अथ सति विलम्बेऽलम्बेगवतो गवेषणाय कृतस-ङ्केतैः समेतैस्तैरन्विष्यानुपलभ्य तां विमनायमानैस्तैस्तनमात्रोप-लब्धिसंजातपरमविषादैः समं निषादैः पुलिनमुपेत्य दृष्टा प्रणम्य पृष्टा सविनयमेषा तपस्विवेषा मौनिनी विज्ञा संज्ञाभिर्जलाव-तीर्णां मां ग्राहग्रस्तामावेदयाञ्चक्रे चक्रे च करुणामभिनयन्ती

विहितसततास्रुमोचने लोचने ततस्तेषु सानुशयेषु स्वदेशमभिग-
तेषु सद्भावसेनया स्वसेतया सहोऽचलम्।

अथाचलमतीत्य विन्ध्यमवन्ध्यकर्मा चिरमत्र सशर्मा म-
र्मविधमवाप्ता न कमपि विधिं तथा तथाविधमिव धनमहमाप्ता सह
समाप्तातिवसुवाञ्छा साकांक्षतीव तत्र दर्शने प्राप्ता सकलसि-
द्धिमूलं पादमूलमिदमिति। ततस्तदेतदखिलमाकर्ण्यैव तां शिरसि
जिघ्रन्ती पुनः पुनरालिंगयन्ती प्रशशंस। अथातीतेषु केषुचिद् दि-
वसेषु राज्ञो धर्मवर्मणः शान्तिपुरःपुरोधसोऽतिविमलकर्मणो धि-
ष्णुशर्मणो जामातुर्मातुरेकभक्तस्य सकलाम्नायदक्षस्य वाचस्प-
तिसमकक्षस्य शमदमदयादाक्षिण्यैरहीनस्य दीनस्यापि किञ्चिदपि
न प्रतिगृह्णतो वन्येन वर्तयतो महर्षिकल्पस्य धर्मैकयत्तस्य ब्रह्म-
दत्तस्य तनयां कान्तिमतीं कान्तिमती नाम कामयमानेन मानेन
धनसमृद्धेरतीतसकलधर्मेण कामाधीनकरणेन करणेन केनापि
प्रतिपादितप्राज्यधनलाभाशा मा शायात्मनः प्रतिपन्नगर्हितबुधन-
कत्रसाया सायाह्नि भवनगता भवनसरस्तटोपगतां सम्मदाद-
पांचालिकां पांचालिकामुपेत्य तद्घटनाय नियुक्तवती। तया तु
नाधुना धनत्रय्या भवत्याः किञ्चिदनालोच्य कर्तुमुचितमनुचितं
हि समधीतसाङ्गसकलवेदः परमवेदः दुहितुः करणेन संघटनम् न-
टनं शठमतीनां भवति वरे तावदेव खलु सुखदम् यावन्नापकारो
न कस्यचिद् द्विजवरस्य निसर्गसौम्यमपि ब्रह्मं ज्योतिरपकृतं
महापकाराय भवतीति भवती विलोकयतु विलोकय तुराषाडपि
शंकितस्तपस्विजनात् यदि नितान्तशान्तोऽपि विज्ञातवृत्तान्त
सतानतो मुनिः प्रकुप्य शपेत्तदा वनेन न धनं विपुलधनं वापि
शैलवनं कोपपवनसमीरितो हि मुनिजनशापानलस्त्रिदिवगमन-
पि जनं दहति। तथाहि महेन्द्रपदमुपेतोऽपि कर्मपुरुषो नहुषो मुने-
रगस्त्यस्य शापादजगरो बभूव। वातवोऽपि शापाद् गौतममहर्षेः

सहस्रभगो बभूव । विधुरप्यौषधीशो विप्रशापावधूतो राजयक्ष्माणमवाप । धर्मोऽपि माण्डव्यस्य मुनेः शापात् शूद्रायोनौ जनिं लेभे नृगोऽपि राजर्षिर्विप्रशापात् कृकलासत्वमपद्यत । विजितदानवा यादवा अपि विप्रशापावधूता क्लिशुरेव । मन्येऽन्येऽपि देवदानवगन्धर्वाः सगर्वाः सहस्रशः सहाप्सरोभिः विप्रशापादनिष्टां गतिमवापुः । कासांचनारदा हेतुरतिलोभान्धबुद्धिना । तद्विरमास्मान्मलीमसात् कर्मणो जहीहि चैतां दुष्पूरां धनशामिति शतशः प्रतिषिद्धापि क्रुद्धा तामवभर्त्स्य सत्रा समानमानसा स्वयमेव तद्घटनव्यवसायं सायं प्रातरतनोत् व्यतनोच्च तद्भवनमनुगमनम् । तदनु तदनुचितवदनसंजातान्तःक्षोभा रक्षोभावमिव भावमस्याः क्रूरं मत्वा गत्वाकुला कोपेनादायाभरणभाण्डं पांचालिं प्राविसत् । शंकरदत्तस्त्वनचितविमलकुसुमः सुमनावनात् प्रतिनिवृत्तः पथि 'स्त्रीत्वं क्षीवत्वमेकान्तः पुंसो लाभो नियन्त्रणा । यत्र पञ्चाग्नयस्तत्र वार्ता शीलतृणस्य का' इति श्लोकं पठतः महर्षे कस्यापि मुखादाकर्णयाञ्चक्रे । तदर्थं च पर्यालोकयन्ननियन्त्रितपरगृहगत्यां वयोरूपकान्तिमत्यां रात्निमत्यां तनयायां दोषं[illegible]माशंक्य कम्पमानोऽदृष्टपूर्वां निर्यान्तीं गृहादिमामालोकयाञ्चक्रे अवरुध्य च विरुद्धवेषशीलामश्लीलामेनां कासि किञ्चेहागमनकारणं तत्र कथयेति ससंभ्रमः पप्रच्छ । इयं तु दुरिताररापलु[illegible]प्रतिभामोहाद्भगवद्भवनदर्शनायेति तमवादीत् । स तु विहस्याहो विहाय राजमन्दिराणि विचित्राणि च धनिकभवनानि जीर्णतृणकाष्ठनिर्मिते लम्बमानजीर्णतरचीरे ममास्मिन् कुटीरे का तव दिदृक्षा तदसि कापि दुष्टा दूषयितुं मामुपगतेत्यभिधाय विधाय चेनां निगडबद्धां बद्धाञ्जलिमुपस्थितं राजानं तदावेदयत् । राज्ञा तु समाहूय पृष्टा कर्णनासाच्छेदोपतापच्छेदभीषिता यथार्थमचकथत् । कुपितेन सर्वस्वमपहृत्यावध्यतया स्त्रीजनस्य

पुराङ्गिर्वासिता सिता च स्नेहपाशेन पाञ्चालिकाप्रवृत्तिं जिज्ञासमाना मामुपस्थिता भवति । सार्वाहैवोग्रेण महोग्रेण नाम्ना चीर्योदग्रेण सरागं विधिना गान्धर्वेणोढा नवोढा वोढारं रंजयन्ती सुभगाः सौभाग्येनामन्दा सानन्दा वसतीत्यभिधाय मुञ्जयन्ती सुभगाः सौभाग्येनामन्दा सानन्दा वसतीत्यभिधाय मुनिर्विधाय सस्मितं मुखं राज हननसम्मुखं यस्यापरस्यापीहागतस्य तपस्विनोऽपि स्वकर्मविधिविपाकफलमहो गृहिणामपि मेधाविनामेधानिव वह्निरहि दोषा यं धागतमनसा मनसिजो दहतु न कथमिह विचारानिति वदन्नात्मवञ्चनं स्मरन्गुणांश्च शिवशिवमतिष्ठत् ।

इति श्रीदीक्षितचक्रपाणिविरचिते दशकुमारशेषे द्वितीय उच्छ्वासः ॥ २ ॥

# तृतीयोच्छ्वासः

अथैतदाकर्ण्य सविस्मयः स्मयमानो राजवाहनः स्वभा-
वकुटिलं जटिलं कमपि खरनखरविभिन्नगात्रं शात्रवैकं दैन्यस्य
विग्नं नाणीव्रणां पुरुषमेकमायान्तमपश्यत् । स तु दूरादेव मु-
निमभिवन्द्य व्रीडयापासर्पत् । मुनिस्तु तमवलोक्य किंचिद्विह-
स्याब्रवीत् । अहो निकषचर्मशमसौजन्यकमलानि विगतमदा-
दिकमलानि निर्वेदपरमपदानि सरांसि मुनीनामपि मनांसि
कामेन करिणा मत्तेन विक्षिप्यन्ते । विकृते च मनसि कमनसि
न पातयति वेधाः ? किं बहुना कृतामुष्मिकधर्मशर्माद्धि न
कापि कोविदैर्दैवे निजापनयैरिति कोयं कस्मात्त्वयापनय इति विस-
तनिनयेन पृष्टो राजतनयेन मुनिरवोचत् । असौ किल पाटलि-
पुत्रे सुरेशनगरसमे शमे दमे चरतः पुरतः पूर्वस्यां दिशि कुटीरे
तीरे गङ्गाया वाचंयमो भिक्षाशी प्रियः पौराणां सुखमवसत् ।
भिक्षामटन्नयमेकदा लब्धसुभद्रस्य वणिजः कन्यामन्यातिशा-
यिनीं काञ्चनमालिनीं मालिनीनामावलोक्य मदनाविष्टोऽ-
शिष्टो विहाय मौनं हा कष्टमिति विवर्णवदनो वदन् रुद-
न्नेकान्ते शान्ते स्थितः सुभद्रपुरोगैर्नागरैर्मौनभङ्गकारणमनुयुक्तो
मुक्तोरुनिजधर्मो धर्मोद्विन्नजनं विषादमभिनयन्नभ्यधात् ।

इयं खलु सुभद्रदुहिता स्वहितायोत्तमरूपधारिणी शाकिनी
प्रतिवेशिनस्तदनु पौरानथात्मीयं बन्धुवर्गं बान्धवं सर्वमष्टाद-
शवर्षदेशीयाभ्यवहृत्य स्वं रूपं प्रतिपत्स्यते इति तद्वलोकना-
देव देवागत्याधिगत्य ससंभ्रमो मौनमत्यजम् । असभंगोऽपि परे-
षां श्रेयसे जायमानो न दोषाय विशेषतस्तस्मदानं रहस्यं चेद-
मनाख्येयमाख्यानतकारा विधूनमहाकारा सा त्री कदाचिदद्यैव

विप्रकुर्वीनेति ततस्तैस्त्रस्तैः विषण्णैरहोनिषण्णैस्तदुपशान्तये प्र-
णिपत्याभ्यर्थितः सदय इव पुनरनावाचष्ट। अवाच्यमपीदं
भवदनुरोधादुच्यते। प्राप्तायामस्यामममायां समायामेनामेनांसि
कर्तुमुद्यतायुवा बुवा निशाथे मधूच्छिष्टनीरन्ध्रितदारुपञ्जरे
शयानामेव विनिवेश्य मधुमांसे च तत्र विनिधाय प्रज्वलच्छि
खमेकं प्रदीपं विन्यस्योपरि सिद्धार्थतैलपूर्णं तूर्णं शिवमस्तु-
इति अभिधाय विधाय च तदनभिमुखानि मुखानि पश्चिमदि-
गम गङ्गाजिनो जैनमठान्मध्येगङ्गं पंजरं समुत्सृजतेति तेऽपि
तथाभ्युपगच्छन्त। अथममायमायां महानिशायां तथाविधं दारुपंजरं
प्रताक्ष्यमाणा हर्षमाणोऽपास्तभक्तभृत्यो निरस्ताशेषकृत्यो जाग्र-
देवावतस्थे। तत्रैव च क्षणे मानसारसामन्तोऽनन्तोल्लसित-
विमलकर्मा विमलशर्मा नाम भीमकर्माणं चण्डवर्माणं सपरि-
वारं निहतमाकर्ण्य निश्चयोत्तितीर्षुः गङ्गां वंगानभियियासुरंगाग
ता मध्येगङ्गं तदवलोक्य किमेतदिति नाविकैरग्राहयत्। तत्र च
विमलकमलनिकरशोभामिव निशि भयादेकीभूय स्थितामाननच-
न्द्रचंद्रिकापसारिततिमिरामिरावतो मातरमिव लूर्गां मालिनीमव्य
तिमालिनीमवलोक्य सविस्मयः शिविकायामुपावेशयत्। पञ्जरे
तु खरनखरदारितानेकासेतानरं वानरं विनिवेश्य प्रज्वलत्प्रदी-
पप्रभासनाथं पंजरं पयसि गंगायाः प्राचिक्षिपत्। अयं तु स-
विधि समागतं तथाविधं तदवलोक्यातिहृष्टः श्लाघमानः सम-
नीयापनीयाविधानं मालिनीसंगमसुखाय यावत्करं प्रसारयति
तावदतिकुपिततरुणवानरखरदन्तनखरविपाटनविकलसकल-
कायः सभयव्यथमुच्चैश्चुक्रोश। तदुच्चाक्रोशश्रवणसंजातपरम-
भयैस्त्वरितागमनवितत्तनिःश्वासैः सान्तर्हासैर्जनैर्मोचितः शोचित-
श्चिरं सव्रीडमुज्झितकुटीरः स्वाविनयफलमनुभवन् वसुपालितव-
दुत्तपते इति। सोपि हि पुरा स्वार्थसाधनपरायणः कृतापनयः

स्वापनयफलमनुभूव। तथाहि पुरा हि शिबिषु ब्रह्मपुरे नगरे धर्मधनस्य राज्ञः समधीतसकलवेदवेदाङ्गकृत्यवित्पुरोधा धामब्रह्मवर्चसस्य सुमेधा नाम विचित्रायां धर्मपन्त्यां सुमतिविमतिशर्माणावात्मजौ लेभे। तयोः सुमतिशर्मा विमलसकलकर्मा जनकमतानुवर्ती चतुर्वाम्नायेष्वधीती गजतुरगविद्याविदः पितर्युपरतेऽपि राजानमनुवर्तमानो विधिविहितवृत्तिरभूत। विमतिस्तु पित्राक्रुश्यमानोऽप्यागमेष्वदत्तचित्तो वित्ताकार्श्येनोपेक्षितो बन्धुभिर्दैवात् कृषिवृत्तिरप्यनात्मज्ञो बलात् पथिकानवरुध्य वित्तान्यपहरन् विदितवृत्तेन राज्ञा पश्यतः सुमतेः सपुत्रदारो नगरान्निरवास्यत्। स पुनरुपर्वीमं धर्मधनजनपदस्य जनपदस्य घनतरविपुलशाखमाश्रितः शाल्मलीवृक्षमनन्यवृत्तिविज्ञो विद्विष्टाखिलबन्धुवर्गोऽलब्धाशनोऽचिन्तयत्। अहो कथमियमापदेकपदे समापतिता। हा पित्राक्रुश्यमानोपि नाध्ययने मतिमकरवम। कृषिवृत्तिरप्यनात्मज्ञः पान्थानवारुणाधम, अतनवं च कर्कशो बधुभिः सह विरोधम्। काद्य मे गतिरिति चिन्तयन्नेव चेतमलब्धाशनेन रुदता वस्ताशन देहीति पर्यश्रुणा शिशुना परिष्वक्तोऽभाषत स्वयोषाम्। अयि भामिनि! वर्तते किमपि येनास्य निर्वापयेयं क्षुधामिति। तया तु नाथ! नाथसीह कथं न जानासि या नाशिकथा त्र्यम्बकागना स्तुषं गतातुषं हता न मुञ्चंती कुञ्चन्ती सदामदातिकद्वदा सदानंददासी काशी नाम मामदानावमानिनी मानिनी सा यदाददानां शम्बलं शम्बलं चाददाना मामवारुणदपजहावाच्छिद्याभरणभांडमित्युक्तो मुक्तोत्कण्ठस्वनमरोदीत्। परिदेवनश्रवणसंजातदयोऽवरुह्य भूरुहाधिवासी यक्षः सकरुणमपृच्छत्। भोः पान्थ! कोऽसि कुतश्चयासि कथमिहावससि किं च ते शोककारणमिति? अथासावादितः स्ववृत्तान्तमाख्यातवान्। यक्षस्तु सकरुणमरुणान्युपहृत्य कोशानि दोशानिधिर्नाम सशोकमेव तं श्लोकमेकमपठ्यत् —

भद्रकृत्प्राप्नुयाद्भद्रमभद्रं चाप्यभद्रकृत् ।
यस्य नास्त्यत्र विश्वासः स फलेन तमश्नुते ॥

इति व्याजहार च अमुं पठतो भिक्षामटतस्तत्र संपत्स्यते
वृत्तिरिति । स तु तथा पठन्नटन्नलभत परां वृत्तिम् । एकदा तु
माहिष्मतीमनुप्रविचरन्नुच्चैस्तमधीयानो राज्ञा सततामात्यला-
लितेन वसुपालितेन भद्रकृत् पुनः पठेत्यादिष्टो भद्रकृदाख्यया
ख्यातो लब्धपरमवृत्तिरुज्झितहारणाकृतिः सुवासास्तत्र सुखमवसत्
अथातीतेषु केषुचिद्दिवसेषु राजानमाखेटगतं निशम्य सौभाग्यवर्द्धनं
वद्धिताशा शाक्यभिक्षुकया तदुपदिष्टमनसा विहितान्यजनप्रवे-
शप्रनिषेधा तद्भक्तिपरायणान्तःकरणा सम्पादितपूजोपकरणा परि
त्यक्तबन्धनाभरणा सती सहचरीभिर्वनमर्चयन्ती राज्ञा तत्सम-
यसमागमनप्रतिषिद्धशुद्धान्तप्रवेशमवलोक्य राजानं किंचिच्चकिता
परिधूतवचना विवर्णवदना पश्यन्ती कटाक्षैः सव्रीडस्मिता
व्यजिज्ञपत् । देव ! महानयं विधिः स्त्रीजनैकसाध्यो भर्तुरायुरारो
ग्यकरः प्रमदाशतोपभोगक्षमबलवीर्यवृद्धिकरः समुद्रावधिभूवल-
यप्राज्यराज्यप्रतिपत्तिहेतुर्महानुभावतैकभूतश्चेत्यनेकश्रेयस्कर इति स-
म्मंत्र्य सह सखीभिः समारब्धः परन्तु केवलानलपाचितं नरमां-
समिह समीहितं बलये तदर्थमर्थये देवमिति । राजा तु तथोक्त-
स्तत्फलकमेव विधिं मन्यमानो वितन्यमानोरुहर्षः पौरजानपदा-
तिरिक्तं मनसा मनुजं मार्गयमाणो भद्रकृतमेव तथाविधं निश्चि-
स्योपह्वरे सूदमाहूय त्वयाद्य निर्वाणप्रदीपमहानसस्थितेन मदुपादि-
ष्टपाकविधिमुपदिशन्नरोऽसरोचितबलिविधये तन्मांसं गाढे बध्य-
स्तन्मांसं च शूलाकृत्यान्तःपुरे प्रापयेत्यादिदेश । सायं तथापठन्त-
मुपस्थितं भद्रकृतं तु पाकोपदेशायादिदेश । स तु सायं गायन्नेव
तथा व्रजन्पाकविद्योपदेशायानवाप्ततामपरिजनेन प्रभञ्जनेन नाम्ना
राजपुत्रेण दैवाद् राजादेशमात्मसम्पाद्यं ब्रुवता प्रशिथिलबन्धकर्णा

कुण्डलनिर्माणाय नाडिन्धमगृहाय बलान्निसृष्टो दैवाद्राजमार्ग-
पतित कुण्डलमौक्तिकमन्विष्याप्यनुपलभमानः प्रातः प्रतीक्षया
तत्रैव तस्थौ। राजा तु सपरिजनो महोत्सवसंविधानव्यग्रो नक्तं
किञ्चिन्न विवेद। प्रातस्तु पतितमौक्तिकोपलब्धिसंजातसंमदभरे-
णोच्चैस्तरां गायन्तमायान्तमाहूय तं निरीक्ष्य विस्मितः किं न
गतोऽसि मदुपदेशमावेदयितुं सूदमित्यापृच्छ्य तत्कथितकथामा-
कर्ण्य तद्दर्शितकुण्डलं चावलोक्यार्तिविषण्णो निर्विण्णो राज्याद-
विनयमात्मनो विबुध्यन्नेव श्लोकार्थं पर्यालोचयन्नत्यजत। राज्यं
भद्रकृते समर्प्य वनमभिजगामेति। राजवाहनस्त्वेतदार्योपदेश
मन्वानस्तत्त्वानीति विनयमभिनयन्निजबन्धुवर्गोदन्तजिज्ञासां निज-
सम्मुखं मुनिमुखमुदीक्षाञ्चक्रे। दिव्यज्ञानज्ञातसकलजनचरित्रो
भुवनपवित्रोरुकर्मनिधिः स तपोनिधिस्तु विमलदशनकिरणधव-
लाधरः स्मितमिदमवोचत्।

राजहंसनंदन राजवाहन शाम्बापरतनो जातिस्मरकथेय-
मतिमहती। तृतीयमूर्तिप्रवरपरमपुरन्दराय। सुकृते विमलेन सकु-
सुमजलेन भगवन्तमिह विचरन्तमिति सन्निहिता मम नियम-
विधिवेला। तदत्र सद्य एव संतोषितो भवतोऽपि तोषकरमर्थम-
भिदधामि। राजा खलु राजहंसो दिग्विजयप्रस्थितस्य सहृदो
भवतो गतिं ज्ञापयन् सुमतिसुमित्रसुमन्तुसुश्रुतैः सह वामदेवाश्रम-
मुपेत्य मुनिमभिवन्द्योपविष्टः पृष्टोऽमुना गमनवासराद्भवदीयवा
र्तानवधारणं निजागमनकारणमवोचत्। अतीतानागतज्ञाननिधिः
स तपोनिधिस्तु वेदवाक्यनिगाद्यं जगदाद्यं देवदेवं संचिन्त्य जगद्व-
न्द्यात् श्रीकृष्णाज्जाम्बवत्यां शाम्बस्य भवतः समुत्पत्तिं जनित-
मदनयज्ञवतीवदननिहितदृष्टेश्च ते तदादेशवशात् समाधिनिष्ठ-
हंसाकारमहर्षिपदबन्धनं तस्माच्च द्वौ मासौ जन्मान्तरे निगडबन्ध-
मेष्यतीति जनितपरमसंतापं महर्षिवरशापं चेति वृत्तं समाख्यायै

हापि जन्मनि दिग्विजयप्रस्थितस्य भवतो भवतोषणपरचित्तासक्त
मातङ्गद्विजोपकाराय पातालगमनं तत्र च साहायकातिसंतु-
ष्टादधिगतदिव्यभावासंगन्मातंगात् क्षुत्पिपासादिक्लेशोपशमन
समर्थस्य मणेर्लाभम् एकाकिनश्च ते पुनरिहागमनम् भवदुदन्ता-
नधिगमदूयमानहृदां सकलसुहृदां भूयः संगतये प्रयुज्य
सङ्केतं नियुज्य यतस्तत गमनम् सुहृदुदन्तजिज्ञासया
भ्रमतस्तत्रावन्त्यां वसता भवद्वियोगवेदनाभ्यमितेन शकुन
विश्रम्भमितेन सरलोद्भवेन पुष्पोद्भवेन समं समागमम्।

अथ विप्रकुमारच्छद्मनावन्त्यां वसतस्तव सहसोमदत्तसमा
गमविसर्जनाभ्यामवन्तिसुन्दर्यामनुरागमाख्यायावन्तिसुन्दर्याश्च
यदृच्छयोपपन्नभवद्दर्शनजनितमदनपारवश्यम् यज्ञवतीजन्मान्तर-
वृत्तं च विनिवेद्य विद्येश्वरप्रणीताद्भुतेन्द्रजालबलघटितविवाहयो-
र्युवयोः समागमम्। अथ मुनिवरशापवशान्निगडितचरणस्य ते
तथाविधमरिवश्यताम् चण्डवर्मणा चावधूतदुहितृप्रार्थनस्याङ्गराज
स्योद्धरणायाङ्गामभियास्यतानन्यविश्वासादिहानयनम्। मन्त्रिवेदि
तैवंविधभावत्कसमागमप्रतीक्षया चम्पायां वसता विहितातिसाहस
कर्मणापहारवर्मणा चण्डवर्मणस्तथाहननम्। साहायकाय सिंहवर्म
णाश्चम्पेश्वरस्योपगतानां सकलसुहृदां भवता चापवर्मणा चण्ड-
वर्मणा च सहैकदैव दैवयोगात् समागमम्। भवदन्वेषणप्रवृत्तानां
विहितविविधवृत्तानामेषां च तथा तथाराज्यलाभं स्त्रीरत्नलाभं
जन्मान्तरकथाश्चाख्यायापहारवर्मणः पित्रा प्रहारवर्मणा सहोदरे-
णोपहारवर्मणा च समं समागमं परश्वोभाविनमम्बालिकया समं
समञ्जसं विवाहमप्याख्यातवान्। राजहंसस्तु तदेतदखिलमाकर्ण्य
सह मन्त्रिभिः प्रहृष्टो विसृष्टो मुनिना भवनगतोऽधुना धुनाति
वसुमतीखेदम्। अवन्तिसुन्दरी तु मलिनाम्बराङ्गरागा रागावेशपेश
लं स्मरन्ती भवन्तं मुकुलितनयना नय नायक मामपीति वदन्ती

रुदन्ती च शृणु सखि ! प्रियोदन्तं जहि शोकभरमुदीतमिति खे चरीवचनमाकर्ण्योन्मीलितलोचना लोचनालोचितदिग्विभागा महाभागा वक्तारमनवलोक्य किमयं स्वप्न उत विप्रलम्भ उत तथ्यमिदमिति संशयवतीवावतीर्य परमासनाद्विनयवती यो हि मां हिमांशुरिव सततामृतैरनुकम्पते स कम्पते किंनु दृष्टिगोचरीभवितुमिति सप्रणयं कथयन्ती श्लथयन्ती खेदं करकलिततिल कमञ्जर्या सुरमञ्जर्या किमञ्जर्यातिसंगतानुचितेयमिति विचार्यावि भूतया कृताकूतया पूतया च तया मानसारसुतया पूजितया च सस्नेहमयि सखि ! शृंखलया मया खलया सितमुक्तः*प्रसितस्ति से कुशली सह सहचरैरङ्गेषु चम्पायां विराजते । राजतेऽस्तिरस्कारी नारीयमिति मत्वा नत्वा स्थितां पुरतः कृतागसमपि मामनुचकम्पे कम्पेशलमतिः पतिस्तव शरणागतं नानुकम्पते जगति । मया च कृतप्रणामया प्रयान्त्या स्वभवनं भवनन्दनसम समाविश किमुपकरोमीति । निजापनयदोषपरिहाराय सविनयमर्थितः समाश्वासाय मम प्रियतमामुदन्तकथनेनेत्यादिदेशेत्यागत्य त्वां तथा न्यवेदयम् । अहमस्मि सोमरश्मिसम्भवा सुरमञ्जरी नाम सुरसुन्दरी यथा चाहमभवम् । अवन्तिसुन्दरि शृंखला खला च यथ बलाद् वध्नां स्वत्पतिचरणयुगं तथाविदितवृत्तान्तः पृष्टः प्रियतम एव तवावेदयतेत्यभिहिता सखीभिराप्ता सम्भ्रमं विकसितनेत्रारविन्दस्यन्दमानशीतसलिलैर्वक्षसि पतितैर्हृदयसंतापं निर्वापयन्तीव प्रसन्नवदनचन्द्रचन्द्रिकाह्लादितसकलसखीजनमानसकुमुदा मुदानन्तया भान्तीव सदने वदनेहानुचितः किमु सदने सदनकगुणे प्रिये बहिर्गते वास इत्यन्तरारमनेरितेव बहिर्गता भवदुदन्तामृतसेकसंजातजीवांकुरेवोत्कण्ठिताङ्गयष्टिः समभ्यर्च्य सुरमञ्जरीमसू-

*पूर्वं सितः बद्धः पश्चान्मुक्तः मयूरव्यंसकादित्वात् समासः षिञ् बन्धने क्तः इति ।

अत्र च महर्षी वसुवर्षातितोषितार्थिजना नीतसर्वमंगला सर्वमङ्ग-
लाचरणाहितान्तःकरणा सम्भृतपूजोपकरणा नियमितकरणा
शरणागतप्रणयवती समर्च्य भगवतीमुज्झितकदना स्तौति—

क इव तु दयते तथातिदीने शरणागते मनुजे यथाऽम्बिके ! त्वम् ।
भगवति ! वरदे ! प्रणम्य याचे रमणविलोकनकौतुकं प्रयच्छ ॥१॥
शशिसमवदनं सरोजनेत्रं स्मितविकसितदशनांशुभासितोष्ठम् ।
पुनरपि रमणं प्रियम्वदं मे वितर भवानि ! भवानि तेऽङ्घ्रिनम्रा ॥२॥
उपगतमसिहस्तमेकवीरं द्विजवरशापबलात् स्वभावधीरम् ।
रमणमनुगृहाण दीनखेदप्रशमविधायिनि ! शाम्भवि ! प्रसीद ॥३॥
भगवति ! करुणामयि ! प्रपन्ने तव चरणं शरणं जने जनेन ।
भवति भवभरो भवानि भूतः किमसुलभा यजनेन ते जनेन ॥४॥
हर हरदयिते सिते मम त्वं भयभरमुत्थितमाशु कं न कामम् ।
नतिरिह तनुते नुते सुराणां तव पदयोरनयोः शुभोदयानाम् ॥५॥

इति राजवाहनस्तु सकलमेतदाकर्ण्य हृष्टो विसृष्टो मु-
निना तदतीन्द्रियज्ञानविस्मितः सस्मितामलोत्रितमित्रवारितातप-
स्तपोवनमागतः समागतः शिविरन्तिके नाभागसमो निजादेशायत्तं
सोमदत्तं तुलितामरपुराय पुष्पपुराय विससर्ज निरस्तार्थिदैन्यैरन्यैस्तु
सधनमित्रैर्मित्रैः प्रहर्षकरणमुपयमनोपकरणमुपपाद्य क्षीरसागर-
विमलफेनपटलपाण्डुरोत्तरच्छदशयनमधिशायितः स्वदनानुभूय-
मानरमणीयरमणीविलसितः क्षणदां विलक्षणक्षणदां सुखमनै-
षीत् । ततो विवाहोत्सवमनुभूय संभूय विशुद्धहृद्भिः सुहृद्भिरद्य
खलु प्रातः प्रयाणीयमिति व्यवस्थाप्य गतेऽस्मिन् दिने च सम
सीते विहितानन्दविशेषे शर्वरीशेषे प्रास्थानिकपटहमदापयत् ।

इति श्रीदीक्षितचक्रपाणिविरचिते दशकुमार
चरितशेषे तृतीय उच्छ्वासः ॥ ३ ॥

# चतुर्थोच्छ्वासः

अथावन्तिसुन्दरीसमागमोत्सुकमानसं राजवाहनमवलोक्येर्ष्ययेवापसृतायां यामिनीवनितायामरुणोदयसरागायां कोपारुणायामिव पूर्वभामिन्यां यात्रावलोकनकौतुकादिवोदयगिरिशिखरमारूढे सरागे बालमार्तंडे स्वाभिमानातिहृष्टया पश्चिमाङ्गनयाऽऽलेपनपाण्डुरकलश इव विधृते चन्द्रमण्डले राजवाहनागमनवार्तां भृशार्तामवन्तिसुन्दरीमावेदयितुमिवाहम्पूर्विकया गतासु लुप्तसकलतारासु सुहृद्वदनेष्विव विकचत्सु कमलेषु रिपुवदनेष्विव संकुचत्सु कुमुदेषु प्रातरादित्यप्रभापटलसंसर्गसंजातद्विगुणकान्तिना शृंगीकनकेन शोभमानकुथं प्रशमयन्तमिव मदजलधाराभी राजहंसराज्यविरहसंतापमवनेश्चंडपोतकमधिरूढो विमलमुक्ताफलजालिना दुग्धसिन्धुफेनविमलपिण्डपाण्डुरेण दर्शनोत्कलिकागतेन चन्द्रमण्डलेनेवातपत्रेण विराजमानः शरदिन्दुकिरणविमलेन परमाश्रयोत्सुकेन गुणनिकरेणेव चामरेणोपास्यमानः प्रचलितगजघटाघोरचीत्कारघंटारवविमिश्रभेरीभाङ्कारेण सत्वरप्रचलितानेकलक्षवाजिराजिखुराराबव्यामिश्रहेषारवसंसर्गवर्धमानपटहप्रणादेन प्रबलसामन्तवदनपवनाभिपूर्यमाणशङ्खरवाडम्बरेण प्रहृष्टडैण्डिमिकवाद्यमानविपुलडिण्डिमारवेण पुरःप्रचलितानेकसहस्रजनकोलाहलानुविद्धदीर्घतरकाहलानिनादेन गजमदपिच्छिलितभूमिभागपतत्पदातिकलकलेन चापूरयन् रोदसी जयजयेति सर्वतः समुच्चार्यमाणजयशब्दः प्रस्फुरन्मुकुटमणीनामुभयतः कृतस्थितीनां भूमिपतीनां प्रणामाञ्जलीन् प्रतिगृह्णन्नपसरापसरापयाहीति-भाषणानुकूलक्रियमाणसत्वरव्रजनैः करविधृतोरुचामीकरदण्डवारितापरजनैः पुरःसरजनैर्विवतातिध्वानमध्वानमनुसरन् गजतुरगाधिरूढैर्वैणिकवांशिकपाणविकमार्दङ्गिकवाद्यमानततशुषिरघनानद्ध

ध्वनीनाकर्णयन् समुच्चलद्रथकटयोद्भूतप्रभूतघनरवगम्भीरपर-
मरवकर्णनारकेकैः स्तूयमान इव मयूरैः गजतुरगारूढैर्विक्रमरूढैरप
गतदैन्यसैन्यसमेतैः सुहृद्भिरनुगम्यमानः संमर्दितारिबलमानः संप
स्तुलितमेघवाहनो राजवाहनः पुष्पपुरं प्राविशत् ।

ततः सोमदत्ताधिगतवृत्तान्तेन सामात्यपरिच्छदेन राज्ञा
भूमण्डलावतंसेन राजहंसेन सनाथीकृतं प्रहर्षभरमुद्गिरदिव लो-
ककोलाहलैः पुष्पपुरमुपेतैः समुपेतैः परमोपायनभासितभव्यश-
यैर्महाशयैर्विशुद्धबुद्धितुलितवासवामात्यैरमात्यै रोचनाक्षतपुष्प-
दूर्वात्रिमलफलसनाथहस्तैरविहस्तैर्विहितविधिभेर्हितैरर्तिहितैः पु-
रोहितैश्च समर्चितः सहर्षगद्गदं गायन्तीभिः पौरवधूभिर्वारवधू-
भिः पुष्पाक्षतप्रदीपसनाथहस्ताभिः प्रशस्तेभराजगतिकाभिर्मद-
नावरोधभ्रमकारिभिः कुमारिकाभिश्चालङ्कृतपुरोभागः शनैः श-
नैरुपगम्य राजभवनमुज्ज्वलकर्मा प्रतीहारनिर्दिष्टवर्त्मा परमासन-
विराजमानं राजानमाससाद ।

राजा तु दूरत एव राजवाहनमुखचन्द्रावलोकनोद्वेलस-
म्मदपयोराशिरासनादुत्पत्य गाढमालिङ्ग्यान्तरापूर्यमाणानन्दभरे-
ण बहिष्कृतैरिव लोचनसलिलैः पुनरपि यौवराज्याभिषेकमस्य
संपादयन्नुपाघ्राय मूर्धनि स्वासनसमीप एवैनमुपावेशयत् सर्थै-
संपादयन्नुपाघ्राय मूर्धनि स्वासनसमीप एवैनमुपावेशयत्
बापहारवर्मप्रभृतीन्कृतनतीन् राजवाहननिर्विशेषमाश्लिष्योपावे-
शयत् । ततो राजा राज्ञी विषयान्तराज्ञीभूतकारणा युवराजं प्रती-
क्षमाणा विकुर्वाणा द्वारभागमागतेति आकर्ण्य समित्र राजवाह-
नमन्तःपुरायादिशत् । राज्ञी तु युवराजमवलोक्य हर्षमाणा
सत्यपि परिजने निदेशप्रतिपत्तिपरायणे स्वयमेव कृतावरणमङ्ग-
ला गलाश्लेषवती प्रस्नुतपयोधरा धरातलशची शचीसुतसमं स-
मञ्जसचरितमेनमुपाघ्राय मूर्धन्यन्तरसमुत्पातानन्दभरेणेव द्रवी-
भूयाश्रुमिषाद्बहिर्गतेन विनयावनतं सिञ्चन्ती सुचिरमाशिश्लेष ।

तथैवापहारवर्मप्रभृतीनालिंग्य सराजवाहनान्तःपुरमनयत् । तत्र चोपजनितसुखानि मुखानि तेषामवलोकयन्ती कथयन्ती नि-जवृत्तं पृच्छन्ती हर्षयन्ती तामुपवेश्य भोजयाञ्चक्रे । ततः तया विसृष्टास्तेऽतिहृष्टा राजवाहनमुखाः सुखातिशयलसन्मुखाः प्र-णम्य तामास्थानगताः समागतानेकपौरजानपदप्रणामाञ्जलीन् प्र-तीक्षमाणा हर्षमाणा यथायथं कथितेतिहासाः सहासा विरेजुः। अथ जय जय सार्वभौम शाम्भावतार सारसार विजितभूमिपाल विशालदयाधार मानसारमानसारसुताश्वान्त सदन शमन विद्वि-षां दमन धर्मविद्विषां मदन महीमण्डलस्येति सर्वतः स्तूयमानं सम्पदा तुलितमेघवाहनं राजवाहनमामंत्र्य सम्मत्र्य च वामदेवा-श्रमगमनाय सोमदत्तमुखा राजवाहनविसृष्टानि सृष्टानि शिल्पवरैर्मृष्टानि गन्धोदकैरायतनान्युपययुः। ततः सुखशयन-संविष्टो दिवसमुखे समं पङ्कजैर्विनिद्रितलोकलोचने दैवे कृत-यथोचितक्रियो जनितप्रियो राज्ञा विसृष्टोऽतिहृष्टो मित्रजनस-मेतोऽनपेतारुचिनयो नयाचितमातर्नासविधिसकामो वामदेवा-श्रममभिजगाम। गच्छन्नेव च पथि मथितपथिकसंतापं प्रशमि-तपाप दुरापं दुरात्मभिः श्वेतशैत्यविजितहिमालयं वैष्णवमालयं ददर्श। तमुपेत्य चाग्रतो गो विकीर्णोत्तमकुसुमललिततरे परिसरे तान्तः समुपविश्याचान्तः पूतान्तःकरणः पूजोपकरणसंभारभासु-रकरेण विप्रनिकरेण समेतं समभ्यर्च्य भगवन्तमुपविष्टः शिष्टस्य पुरतो निषण्णस्य किञ्चिदिव विषण्णस्य सुमतिसमृद्धस्य कस्यचिद् वृद्धस्य मुखात् स्तोत्रमिदं शुश्राव।

द्रुपदसुताप्रह्लादस्तावेरमरक्षणप्रथितम् ।
त्वामिह रक्षणमिच्छन्नच्युत शरणं प्रपन्नोऽस्मि ॥१॥
आगमनिगमपुराणे केशव को नाम निर्दिष्टः ।
त्वत्तोऽपरः शरण्यो व्रजामि यं शरणमेतर्हि ॥२॥

विश्वम्भर नारायण विष्णोऽच्युतकैटभाराते ।
क्व गतोऽस्मि देव शरणम् भव मे रटतो भृशार्तस्य ॥३॥
विष्वक्सेनाधोक्षज वामन गोविन्द नरसिंह ।
प्रतिपन्नं गतिमीदृशमतिदीनं पाहि मां जीनम् ॥४॥
दामोदर मधुसूदन पुरुषोत्तम पुण्डरीकाक्ष ।
विश्वसिते त्वयि वरदे मयि धेहि दृशं दयासाद्रीम् ॥५॥
श्रीवल्लभ पीताम्बर शौरे श्रीवासुदेव हरे ।
क्व गता मतिर्दयार्द्रा या वाग्गदु खवारणे प्रथिता ॥६॥
गरुडध्वज वनमालिन्ननन्त विश्वेश नरकारे ।
श्रुतिमथ शृणोषि न गिरः कथमिव मे दीनदीनस्य ॥७॥
केशव कृष्ण जनार्दन दैत्यारे विक्रमप्रथित ।
किमुपेक्षसे नृदीनं हीन हा सर्वभावेन ॥८॥
वैकुण्ठ चक्रपाणे माधव देवेश देवकीतनय ।
अपनय ममेश खेदं नानाधिव्याधिसंभूतम् ॥९॥
श्रीमन् वरद दयालो दीने जीने रटत्येवम् ।
न करोषि दीनबन्धो करुणां वद हेतुना केन ॥१०॥
पुण्यमय पुण्यवर्धन पुण्यश्लोकातिपुण्यप्रद ।
करुणामय करुणे मयि करुणां कुरु दीनबन्धुरसि ॥११॥
स्मरणं तव सुखकरणं शरणं दीनस्य वेदतो विदितम् ।
वद विफलं कथमेतत् माधव दीने मयि स्मरति ॥१२॥
संसारसलिलराशौ गिलितं हा दैन्यमकरेण ।
ध्यायन्तमनिशमार्तं केशव किं मां न मोचयसि ॥१३॥
संसारजलधिनानाविधिचिन्तावीचिमग्नस्य ।
मम शरणं तव चरणं स्मरणं यस्येह संपदां करणम् ॥१४॥
दीने दुर्मतिपीने जीने मयि कृष्ण सुखहीने ।
शरणं गते दयीथास्ततः शयीथाः सुख शयने ॥१५॥

राजवाहनस्तु विमलं सकलमेतदाकर्ण्य स्तोत्रं सहर्षकरणं स्तं प्रणनाम । तेन चानतैः सपुत्राचरितैर्दत्ताशीरुपविष्टं समपृच्छत् अत्र भवान् कुत्रत्यो नेहत्य इव भवसि कथमसि च सुमना अपि विमना इवेति । सोऽब्रूत । महाभाग ! भागवतोऽहमस्मि सोमतीर्थवासी वाशिष्ठो विहितविमलकर्माप्यशर्मा सोमशर्मा नाम द्विजन्मा जन्मारभ्य च सभ्यजनमध्यलब्धधनयजमानान्यजमानान्याजयन् विहितवृत्तिरभवम् । अद्य पुनरनुविभक्तनयं तनयं सुविनयं नाम तत्र समयोजयन् । सुकृतविद्योऽपि विद्योपजीवी देवानिविश्य निजभारमन्येषु निरविद्यत् । तमहमब्रवम् । क एव नाम भूतपूर्वोपयोगभव्यपदे कर्मणि वृद्धिकृतं प्रत्ययं बाधते । जयमानः जायते हि यथाशक्ति प्रतिपादयन्नेवार्थं शब्द इव जनो मुख्योऽतथाभूतकृत समुदितलक्षणोऽपि गौर्वाहीक इव गौण एव भवति । इह हि शब्दोऽपि स्वसिद्धिमपेक्षते । तां चापेक्षमाणो लक्षणोपपन्नः परार्थमेव संगृह्णाति । न तु स्वार्थमुत्सृजति । परसिद्धिमवेक्षमाणोऽपि विशुद्धलक्षणः स्वार्थावहेलनं विदधानः स्वार्थाभेदेन परार्थं प्रतिपादयन प्रतिपिपादयिषितस्वप्रयोजनमेव विदधाति । विना प्रयोजनं स्वार्थमुत्सजन् कुशलोऽपि समुदितलक्षणः शुद्धास्पदमलभमानो निगुणवृत्तिर्विफललक्षणो निरूढ एव भवति । निष्प्रयोजनोपचारो हि चाणूर इव कंसानन्दं करोति इति संविदानः कथमुत्सृजसि निष्प्रयोजनं स्वार्थम् साधनाभावप्रयुक्ते साध्याभावेऽनुगुणघटने विशेषोक्तिविषमविभावनालम्बनं साहसमेव स्वाश्रयो हि विधौ परातिदेशवचनमसाम्प्रतमेव ।

तदिह वर्णाश्रये नास्ति प्रत्ययलक्षणमिति किं मद्वचसि न विश्वसिषि । प्रत्ययः परत एव भवति । परप्रत्ययश्च जनो मृच्छकट इव प्रशंसाविषयः । किमिह न भवति । अप्रत्ययस्तु अ-

मरपथं विषयीकुर्वन् प्रतिषिद्धविधिः सुपन्थानं नाकलयति। इहा-
क्षितिरपि सुजनेनार्थितो न वर्णपरिशीलितोऽवर्णलोपं दीर्घतां
च नाश्नाति। परार्थपूर्वस्वार्थः स एव पुनर्न परिवर्जितो वर्णलोपं
दीर्घतां च पूर्वतोऽप्यधिगच्छति। किं बहुना अन्त्यविधिरप्यनर्थकं
परिहरति। नेह सह भुवनानन्तरंगेण प्रबोधेनागन्तुक बहिरंग-
मावेशमसिद्धीकृत्य लब्धावकाशमनपवादं परमपि तं नित्येन ब-
लीयसा सौहार्देन प्रतिहत्य लब्धावकाशमुपनतपरमविनयदोषं
परेण बलीयसा सौजन्येनापनीयान्यत्र नित्यलब्धावकाशमति-
गुरुवचननिमित्तगन्धादुपनतसंभवमपवादं परेणान्तरङ्गेण च
विनयेन निरस्य तथा व्यवहर्तव्यम्, यथा स्तूयसे साधुभिर-
भिनन्द्यसे बन्धुवर्गैरिति। स चान्तर्गतशब्दानुशासनानि मदनुशा-
सनानि समाकर्ण्य चित्रीयमाणमनास्तथैवाभ्यधित। अयि तात!
यदिहानुशासनेष्वव्ययव्ययानां वृत्तिमत्वं तथात्वे च न परार्थपरता
समासस्यैव बहुव्रीहित्वं तथात्वेऽपि न परार्थपरत्वनियमः गुणा-
नामपि द्रव्याश्रयत्वं द्रव्यविभाजकता च ध्वनीनामेव नित्योऽर्थसंब-
न्धः परार्थं स्वार्थं समर्पणं स्वप्रयोजनाय धर्माय तदपि शब्देषु
न जनेषु निरुक्तेष्वोत्तमपुरुषश्रवणं प्रहासे च मध्यमपुरुषवदुत्त-
मपुरुषस्यापि विनियोगः उत्तमपुरुषस्यापि अहङ्कारसम्बन्धसमुदय
इति किमिवात्र भवति सुखहेतुः। दृश्यन्ते चेह विधिबलाद्विधर्गो
विचित्राः तथाहि इह केचिन्मन्दमतयोऽपीतरानुपजीव्य मित्रजनो-
पकरणभरणादिफलं नृपानुसरणमाचरन्तो निवृत्तस्वान्ताः सा-
धयन्त्यभिमतमात्मनोऽर्थमुपकुर्वते चान्येषाम्। केचिद् सुधियो-
ऽपि लाक्षणिकानिवाशक्यार्थप्रतिपत्तिहेतुभूतान गौणानिव समा-
नभावेनोपचरतो महाराजानमप्युपजीव्य स्वजनभरणायापि न
प्रभवन्ति केचिदपरशक्यार्थसंबन्धवतोऽपि निरूढानिव निष्प्रयोज
नोपचारानाराध्य खिद्यन्त एव। केचित् परिभाषाविधय इव

यथोद्देशं गता एवाप्रतिहतशक्तयः स्वार्थेन सर्वमेव विप्रियं प्रकाशयन्ति। केचिदर्थोपार्जनोद्यता अपि असम्पादितार्थाः स्वरूपयोग्या हेतव इव भवन्ति। केचिदलभ्यार्थप्रतिपत्ति-हेतवोऽतिदेशा इवावर्णविषयविधिविषया अपि विधिबलाद्वर्णविषयविधिविषया भवन्ति। केचिद् गुणहीना अपि प्रकृतितो विधिबलसजातवृद्धिहेतुपदलाभपरप्रत्ययप्राप्तवृद्धयः सख्याय इव भवन्ति। केचिद् विधिविहितगुणदैर्घ्यहेतुपरप्रत्ययलाभसम्पन्नगुणदीर्घभावा धातार इव भवन्ति। केचित् सत्यपि परस्मिन् गुणहेतावनधिगतगुणा अपि विधिबलादधिगतवृद्धयः प्रौढायन्ते। केचित् सत्यपि परस्मिन् वृद्धिहेतावनधिगतवृद्धयोऽपि विधिबलादपूर्वस्वरूपभाजः प्रेजन्त इव सन्ति। केचित् परवृद्धिबाधितोत्तमवृद्धयोऽपि विधिबलात् सम्पन्नगुणोदया मार्दवमनुसरन्ति। केचिद् प्रकृतितो गुणवन्तः परस्य वृद्धिहेतुपदलाभमापादयन्तः परतः परां वृद्धिमधिगता गाव इव भवन्ति। केचित् तास्तगिका इव परार्थं स्वार्थमुत्सृजन्तोऽप्यकलीबा विधिबलाद् ह्रस्वीभूतगुणाश्चित्रगवन्ति। केचिद् वृद्धिमन्तः परार्थप्रतिपादनपराः क्लैब्यमापन्ना विधिवशाद् ह्रस्वीभूतवृद्धयोऽतितरन्ति। किं बहुना गुणाभावहेतुरपि गुणहेतुतां वृद्ध्यभावहेतुरपि वृद्धिहेतुतां क्वचिद् गुणवृद्धिहेतुरपि गुणवृद्ध्यभावहेतुतां विधिबलादुपेयातीति वैधीमेव गतिं विचित्रां मत्वा दृष्ट्वा चाकर्मकानपि देशकालवशात् सकर्मकान् सकर्मकानपि परार्थपरतयाऽकर्मकानिति किमिह दुःखाकरोषि मामिति। मया तु पुनरपि सहजस्नेहसम्बन्धात् निर्बन्धात्तथाभिहितो गृहान्निरगात्।

अथाहं तदनुपदी भूशर्दानस्तमतिविमतिपीनमिह लीनमुपलभ्य समुज्झितखेदो निर्वेदोपशमसमर्थैरर्थैः श्रुतिस्मृतीतिहासपुराणसिद्धैस्तमनुनीय पुनरवोचम्। त्वमसि ममैकः पुत्रो जनितपुन्नाऽमुत्राचितविधिविमुखः कुत्रोपवेक्ष्यसे वत्स परत्रेह च सुख-

सायनं वा धनं च शोकतमसः परमं ज्योतिरपत्यं नाम । श्रूयते हि
पुरा किल मायावरो जरत्कारुर्नाम परममुनिर्निर्विण्णोऽपि निरपत्यः
कश्चिदरण्यकूपे जलार्थी दूर्वातन्तुप्रोतानधोमुखं लम्बमानान्
जीवानात्ममात्रापत्यतया स्वात्यये निरयगामिनो निजपितॄन् बु-
द्ध्वा तदादेशाज्जरत्कारुं नामात्मसनामानं नागकन्यामुपयम्या-
स्तीकमजनयत् । मन्दपालोऽपि परममुनिर्निरपत्यतया क्वापि लो-
के वासमलभमानश्चटको भूत्वा चटकया संभूय शार्ङ्गवादीन्
चाटकैरानजनयत् । तदिहोपगम्य कुलकन्यां धन्यामपत्योत्पादना
य प्रयतस्व । किं च मातरि पितरि जीवति च कथमन्यानुसारवि
मुखो वन्याशी सन्यासी वा भवितुमर्हसीति । स तु मयैवमुक्तो
मुक्तोरुशब्दो विलक्षाननोऽननोचितविधये मुनिजनशरण्यमिदम-
रण्यं फलमूलकन्दाहरणाय प्रयातो नायात इति चिन्तयन्नहं न
हन्तेह सुखं खिन्नः खिन्नश्च विविधभेदैः खेदैरन्यैरैहिकामुष्मिकश्चो
वर्णार्थैककरणमशरणशरणं चरणं विष्णोः शरणमुपगतोऽस्मीति।
राजवाहनस्तु विचित्रं तयोर्वैदुष्यं विभाव्य विस्मयमानः स्फुर-
यतयात्वीव परमहर्षः सशिरःकम्पं सहचराननान्यवलोकयन् सखि
भिरसमुपाचरत् । अथ पत्रपुटोपनीतविमलमूलफलकन्दं मन्दं मन्द
मागत्य रूप्यतया निरूप्य राजानमाशास्योपश्लोकयन्तं विलोक-
यन्तं च सविनयं सुविनयमपश्यत् । ततस्तौ प्रशस्तौ कुलशीलवि-
द्याविनयैर्धर्माधिकारेऽभिषिच्य सहैव ताभ्यां मुनिमभिनन्द्य भक्ति
तोभवानुगुणमभ्यर्च्य चोपविष्टः पृष्टोऽमुना सह मित्रवृत्तान्ते-
नात्मवृत्तान्तमाख्यातवान् । मुनिस्तु तेषामाननान्यवलोकयन्नेतच्च
श्च देवदानवगन्धर्वकुमाराणामायुष्यमुपगतानामपि धरातलमिति
स्मयमानः तान् प्रशशंस । अथ तौ प्रथितौ वैदुष्येण कृतमतौ
धर्माधर्मसंशयोपहतमती विलोक्य मुनिरशंसत् । नोपलब्धवैभव-
योरपि युवयोर्विहितधर्मक्षोभेण लोभेन धारयिष्यते । चित्तं चित्तं

हि नाम तिमिरं लसत्प्रबोधप्रदीपं दोषज्ञस्य नान्धयति चित्तं यथा
जानस्तु यथा तथा निजमपरं च जनं वंचयन्तं च यत्नात्मानमन्ध-
यन् विधिचक्षुषी स्वचक्षुषीरुत्तलाभोपचक्षुषी विमलयन्
शङ्करस्वामी च पराभूतो दुःखयति । तथा हि पुरा किल वर्धमान-
पुरे राज्ञो धर्मवर्धनस्य पुरोधा धाम लोभस्य महाधनो राजदत्तस्या-
र्थमपहरन्नतिथिभ्यो नित्यमनुचितकर्माऽधर्मालयः शंकरस्वामि-
नामाभवत् । तथाविधं तमाकर्ण्य कर्णालयनगरवासिनौ परिवा-
रीकृतानेकधूर्तौ मूर्तौ द्वेषलोभौ शिवमाधवाभिधौ कपटपाटवमुषि-
तार्थमातुर पुरमवलोक्य मन्त्रयामासतुः । अद्य खलु शङ्करस्वामी
चामीकरपूरितनिकेतनः । श्रूयते कन्यारत्नं च तस्यास्ति । तदप्य-
वाप्यते कदाचिदिति विशिष्य तत्र गन्तव्यमिति । ततस्तथा नि-
श्चित्य कर्तव्यसन्धिदं विधाय पुरात् प्रययतुः ।

अथ तत्पुरमवाप्य सपरिच्छेदो माधवो राजपुत्रवेषं वि-
धाय पुराद् बहिरुपवने क्वचिदावासमकरोत् । शिवस्तु रम्यघन-
विपुलशाखवटे विगतावटे कावेरीतटे शिवालयोपकण्ठविहितकुटी-
रो हस्तन्यस्थापितमृद्दर्भभिक्षाभाण्डाजिनः सौगतायन प्रातः प्रातर्घनया
मृदाङ्गानि लिम्पन्नर्वाचीनरककर्दमालेपमिव कुर्वन्नधोमुखः सरि-
त्तोये निमज्जयन्नभ्यासमिव भविष्यन्त्याः कुर्वन्नधोगतेः स्नानो-
त्थितश्चार्काभिमुखश्चिरं तिष्ठन्नात्मनः शूलाधिरोपणौचित्यमिव
प्रदर्शयन् कुशकूर्चपूर्णाकरः पद्मासनासीनः स्वच्छैराकृष्टैः साधु-
हृदयैरिव पुष्पैः पुरारिं परिपूज्योत्तम्भितकन्धरो जपन्नहरहरति-
ष्ठत् । अपराह्णे चान्वहं कृष्णसाराजिनाम्बरः स्फटाक्ष इव माया-
याः परिभ्रम्याभिगम्य भिक्षामभ्यागतेभ्यः श्वकाकेभ्यश्च तद्भागं
वितीर्य स्वयं च प्राश्य पुनरक्षमालामलीकमावर्तयन् यावज्जनसमा-
गममन्तर्मठमतिष्ठत् । अभूच्च नगरवासिनां महामान्यः । प्रास-
र्पच्चास्य कीर्तिरतिमहती । शान्तो विनीतश्चायं महातपस्वी ना-

स्नाऽशिवः शिव एवेति माधवस्त्वेतदवधार्य प्रविश्य नगरं क्वचि
द्देवमठे वसतिं परिगृह्यापूर्व इव राजपुत्रच्छद्मना कावेरीतटमुपेत्य
स्नात्वा सपरिजनोऽभिवन्द्य शिवं शिवं च जपप्रसितं भूयोऽभि-
वन्द्य बहिरेत्य समस्तजनसमक्षमलीकांस्तांस्ताननेकजनकथितान-
स्य गुणान् वर्णयन् जनस्य द्विगुणां भक्तिमवर्धयत्। अमंस्यत
च सर्वोऽहितमात्मनः सिद्धम्।

अथैकदोत्तमवयमनतुगं प्राभृतीकृत्यात्मनोऽनुचरमेकमनेक
धोपदिश्य शंकरस्वामिने प्राजिघाय। स चोपेत्य तं विजने प्राभृतं
विनिवेश्य विनययुक्तोऽनुयुक्तः पुरोधसमुवाच। द्विजवर राजपुत्रो
माधवो नाम दानशौण्डो गोत्रजकलहात्पित्र्यं बहु वसु समादाय
दक्षिणापथात् सहान्यैः राजपुत्रैरिहोपेत्य भवद्गुणानाकर्ण्य स-
त्यपि स्वापतेये परिजनानुरोधेन भवन्निवेदितो राजानं सिषेवि-
षत इति। ततो लब्धसत्कारे प्रत्यागते संमिलल्लब्धावकाशः सहा-
न्यैः पञ्चषैरलङ्कृतैर्विचित्राद्भुतकृत्रिममाणिक्यमयमण्डनम-
ण्डितो वंचनपण्डितो माधवः पुरोधसमभिजगाम। तेन चातिस
त्कृतः कृतविश्रम्भः कथालापः क्षणं स्थित्वा तदनुमतो भवनमु-
पेत्य पुनराकर्षणौषध लुब्धानां प्राभृतं तथाविधं प्राहिणोत्। अ-
थापरेद्युरागतेनोपचारपरितुष्टेन व्याजाद्वसन्दर्शितैः कृत्रिममा-
णिक्यमयैः स्फुरद्भिराभरणैर्विलोभ्यमानमानसेन पुरोहितेन स्वा-
वासमुपनीतस्तन्निवेदितवासेन राज्ञा विहितवृत्तिरतिष्ठत्। अथा
तीतेषु केषुचिद्दिवसेषु शरीरावस्थां विषमामुपगम्यानस्थिरे खलु
शरीरे कैवास्था मनस्विनो धनेष्विति सनिर्वेदं वदन् सर्वस्वदान
पात्रद्विजानयनाय पुरोधसं समादिशत्। स त्वानीतेष्वनेकेष्वपि
द्विजेष्वलब्धमाधवसम्मतिः किञ्चिदिव विषण्णो वंचनचतुरेण
माधवानुचरेणोत्थमबोधि। मन्ये न सामान्याय द्विजाय सर्वस्वं
दित्सति विभुस्तदिह कावेरीतटवासिने तपस्विने नूनमसौ प्रदा-

ष्यतीति । पुरोहितस्तु तथेत्यभ्युपेत्य कावेरीतटमुपेत्य समुत्तम्भित-कन्धरं अपन्तं तपन्तमिव तेजसा शिवमवलोक्य कृतप्रमाणो विविक्त भ्रूसंज्ञयाभ्यनुज्ञातो व्यजिज्ञपत् । भगवन् ! महाधनो माधवो नाम दाक्षिणात्यो राजपुत्रः किञ्चिदस्वस्थशरीरो न सामान्याय जगन्मान्यायात्रभवते सर्वस्वं दित्सति मणिमुक्तासुवर्णमयं दलितदैन्यामयं तदादातुं प्रसीदतु भवानिति । शिवस्तु अशिवचरितस्तथेरितः पुरो पुरोहितेनावोचत् । ब्रह्मन् ! भिक्षाशिनो ममैकाकिनः किमनेन साधुजनविगर्हितेन प्रतिग्रहेणेति पुरोहितस्तु तथाभिहितो हितमुपदिशन्पुनरवोचत् । भगवन् ! मैवं वादीर्विदिताश्रमक्रमस्य समुपात्तद्वितीयाश्रमस्य देवतातिथिपितृक्रियाः कुर्वतस्त्रिवर्गमनुभवतो भवतः शनैः कशमिव अर्वाति नार्थ इति । शिवस्तु पुरोधसैवमभिहितो हितोपदेशसुखमभिनयन्नभ्यधात् । सत्यमात्थ परन्तु कुतोऽद्य मम दारसंग्रहो यतो नाहं यादृशात्तादृशाद् वा कुलात्कन्यां परिणेष्यामीति मे परमसंकल्प इति । पुरोहितस्तु लब्धावसरः सविनयमुपेत्य शिवमब्रवीत् । भगवन् ! अस्ति मे विनयस्वामिनी नाम कन्या । भवतोऽपि द्वितीयाश्रमपरिग्रहोचितोऽयं समयस्तदिमां परिणीय तत्प्रतिगृह्य मद्दत्तं भुङ्क्ष्वेति । शिवस्त्वेवमुक्तो मुक्तोरुविश्रम्भः समवादीत् । ब्रह्मन्नैष्ठिकब्रह्मचारिकल्पोऽनल्पोपशममनायत्तचित्तो हेमरत्नविस्तारचितज्ञानाविक्तोह भवद्वचसा प्रवर्ते वर्तेथा मयि सदा सदय इति । पुरोहितस्तु गूढभावो मूढः संनिवेश्य शिवं चतुर्थेऽहनि व्याजव्याधिमतो माधवस्यान्तिकमनैषीत् । माधवस्त्वतक्यतपसं वन्दे भवन्तमित्यविरतं वदन्नुत्थाय पादयोर्निपत्य भूरिकृत्रिममणिमयाभरणभाण्डं पश्यतः पुरोधसस्तु तस्मै प्रादात् । शिवस्तु तदादाय प्रदाय चाशिषं माधवाय तदशेषं हस्ते पुरोधसो निदधौ । सोऽपि तदादाय स्वकोशभवने भवत्वेपश्यं ममैव सन्निहितमिति शनैर्वदन्नतिष्ठत् । माधवोऽपि शनै

शनैः स्वव्याधिमान्द्यं महादानप्रभावादुपदर्शयन् धर्मसहायेन भ-
वता समुत्तीर्णोऽहं महामयसागरमिति पुनः पुनः पुरोधसं वर्णयन्
त्वत्प्रसादाभिरामयं मम शरीरमिति कीर्तयन् शिवेन साकं प्रका-
शं परमसौहार्दमुद्भावयन् राजानमनुरञ्जयन्नतिष्ठत।

अथातीतेषु केषुचिद्दिवसेषु शिवः पुरोहितं सविनयमवो-
चत्। आर्य सति साधने महति धने धनेश्वरसमस्यापि भवतो-
ऽनिबेलमवतोऽपि सदा सदने मया न भोक्तुमुचितं तदिदमाभर
णजातं विक्रीणातु वा सकलं भवानेवेति। स तु तेनैवमुक्तोऽति-
हृष्टो माधवादि साक्षिकं प्रदर्श्य स्वावायं तदादाय कृतकृत्यः
कदाचित् परिधाय कानिचिदाभरणान्यापणगतो विचित्राद्भुतम-
णिदर्शनविस्मितैः परीक्ष्य सस्मितैः रत्नपरीक्षाचतुरैरहो विचित्र
मिदं क्रियाकौशलं कस्यापि यदिमानि नानारागोपरञ्जितकाचस्फ-
टिकखण्डमयान्यपि सत्यमणिमयानीव रीतिनद्धान्यपि काञ्चन-
खचितानीव लक्ष्यन्ते इत्यभिहितस्तदखिलं प्रदर्श्य तथाविधं वि-
ज्ञाय शिवमुवाच गृहाण स्वालंकारान् देहि मे निखिलं धनमिति
शिवेन तु कुतोऽद्य मम धनं तद्धि कालेन परिभुक्तं दत्तं चार्थिमित्र-
बन्धुवर्गेभ्यः इत्येवमुक्तो मुक्तोरुकण्ठस्वरमरोदीत्। अथोपेत्य राजा-
नमवोचत्। नानारागोपरञ्जितानि रीतिबद्धानि काचस्फटिकख-
ण्डानि विक्रीयाजानतो मम सर्वस्वं शिवेन भक्षितमिति। शिवस्तु
राज्ञा समाहूय पृष्टो नगरमान्यो निःक्षोभः समासीने शृण्वति
माधवे समाचष्ट। राजन्नहमाबाल्यात्तापसः कावेरीतटे शिवाल-
यमालोक्य प्रीतिमान्वसन् भिक्षाशी निर्बन्धेनास्य माधवात्तद-
खिलं प्रतिगृह्य निकेतनस्तदेवास्मै समार्पयम्। अनेन वानेकजन
साक्षिकं मूल्यं वितीर्याधुनार्थिमित्रबन्धुवर्गप्रतिप्रतिपादितार्थस्म-
स्मरत्यर्पणार्थमहमुच्ये। तदस्य पुरोधसो माधवस्य मम वा दोषं
महाराजो विविनक्तीति। ततः तदाकर्ण्याहो द्विजवर न मया ग-

वतः पुरोहितस्य वा भवनात् किञ्चिदपि गृहीतं किंतु पैत्रिकं धन-मन्यत्र चिरन्यासीकृतमुपादायेहागतेन शरीरावस्थां विषमामव-लोक्य विप्रवरायात्र भवते निवेदितम् । कोऽत्र ममापराधः ? सत्यं यदि न स्वर्णं न च तानि रत्नानि तर्हि रीतिकाचस्फटिक-प्रदानजन्यं मम भवतु फलम् मया न निर्व्याजहृदयेन मणिमुक्ता स्वर्णप्रदानपोतोत्तरणीयोयं महामयसागरः समुत्तीर्ण इति लम्-न्मुखवर्णे वदति माधवे राजा सह मन्त्रिभिरुच्चैर्जहास तुतोष च । सभ्याश्च नानापनयो माधवस्य शिवस्य वा कश्चनावलो-कय इति सकौतुकमूचुः । अथ लज्जितो जितस्तेन सोढुमशक्नुवन् सान्तर्हासवाक्यानि पौराणां दाराणां च गर्हणानि पुनरुपेक्षितो नि-रीक्षितो दुर्दैवेन पुरोहितो निस्योहितोरुलोभकृत्योविभृत्यो वनमभि-जगाम । तदेवमबोधोपहतात्मनामपुण्यकर्मणां सैवापर्याप्त लोभा-न्धता न सत्यां तस्यामुदेति । धर्मवासना न च तां विना समुत्प-द्यन्ते धनानि समुत्पन्नानि वा चिरमुपतिष्ठन्ते । धर्मबीजप्ररूढो-ऽर्थपादपस्तु सत्यवारिसिक्तः श्रीधरस्येव व्यसनिनमपि पुत्रपौत्रा-दिकं विविधसुखधनफलैरुपकरोति । तथाहि—

पुरा हि किल काञ्चीपुरे केनापि द्विजेन वाच्यमानेषु धर्मेषु श्रीधरः शीलसत्यसंरक्षणसमयानां स न्यायेनार्जनमर्जितानां च दैवे पित्र्ये च कर्मणि विनियोजनमात्मानिर्विशेषं च भ्रातृबन्धुव-र्गेषु पणनं त्रिवर्गसाधनमाकर्ण्य तथैव व्यवजहार । समक्षे परो-क्षे वाभिज्ञेन भिज्ञे वा जने सत्येन क्रयविक्रयव्यवहारे किञ्चिन्न व्यभिचचार समनुजग्राह च यथाशक्ति दीनाननाथांश्च । ततोऽव धूतशङ्काविपङ्कास्तस्मादेव पौराजानपदाश्चात्यधूयान्यान समीहितं वस्तु जगृहुः तुतुषुश्चास्यात्मनो बन्धुवर्गस्य च पुत्रदारेषु समवृत्त्या देवैः सह मनुजाः तथा व्यवहरतश्चास्य सह धनेन धर्म्या कीर्तिर

वर्धत । अथायुषि क्षीणेऽप्यक्षीणपुण्यः स पुनरुपरतोऽमरेषु प्रति-
ष्ठामलभत । तत्पुत्रपौत्रावपि तदाकसौ मनोजवसौ समभूताम् ।
प्रपौत्रस्तु तस्य विशृङ्खलो नामार्गलपुरवासिनो विशंकरस्य वणिजः
कुटिलिकां नाम कन्यकामुपयम्य पितर्युपरतेऽनियन्त्रितो व्यसनी
द्यूतादिव्यसनोपहारितसर्वस्वः पौरैरुपेक्षितः श्वसुरपुराय प्राति-
ष्ठत् । उपेत्य च पुरं पुरन्दरनगरानं कुचेलतया दिवा श्वसुरसदन-
मविविक्षुरन्धतमसः प्रतीक्षया क्वचिच्छून्यवेश्मनः परिसरे तरो
रुपमूले कृतस्थितिरुल्लसद्भूषणां कांचिद् वनितां नितान्तनील-
पटमधिवसानां मन्दपदं वेश्म प्रविशन्तीमपश्यत् । तदनु च नील-
पट कपटेन बामनं तदेव वेश्म विशन्तं पुरुषमप्येकमपश्यत् । स
तु गत्वा स्वपत्नीमेव तामुत्प्रेक्षमाणः प्रेक्षमाणः तदखिलं क्षममा-
णः कपाटान्तरालदत्तकर्णः सुरतैरसंतुष्टायाः किंचिद् विकलमनसं
जारमवलोक्य सप्रणयं कथयन्त्यास्तस्या वचनानि शुश्राव । अयि
नाथ कथय कथमसि विकल इव । यदि तु धनाय विमनायसे
तर्हि माविषीद सन्ति मम श्वसुरसद्मनश्चतुर्षु कोणेषु पक्वेष्टक-
चितभावशोणेषु कनकपूर्णा वर्षशतोपभोगेनाप्यक्षयाश्चत्वारः कु-
म्भास्तांश्च परम्परया स्त्रिय एव जानन्ति । तद् भवनगताहमेतान्
व्यसनितयाऽनाख्याय दरिद्रितेऽपि पत्यौ नाख्यातानुत्खाय समुप
नीतबहलवाहनाय मिषेण केनचित्तन्नगरगताय भवते वितीर्य
पुनरिहागत्य यथेच्छं सह भवता विहरिष्यामीति । स तु तदाक-
र्ण्य स्वपत्नीमेव तां निर्णीय तदाख्यातकुम्भांश्चाकर्ण्य कोपानन्द-
पयोराशिमध्यपतितः श्वसुरसदनमगत्वैव प्रतिनिवृत्तो भवनगत-
स्तानुत्खाय स्वभवनान्तरे समतिष्ठिपत् । बन्धुवर्गप्रेरितश्चानुद्भावि
तविकारस्तच्चरितं च दिदृक्षुः कुटिलिकामप्यानैषीत् । अथ गतायां
तस्यामसत्यां तदुपपतिर्वणिज्याव्याजेनोपनीतबहलवाहनस्तद्भवन
मनेकजनसाक्षिकं विशृंखलोक्तेनेव मूलेनात्मसादकरोत् । तत्र च

तदुपदिष्टान् विशिष्टाष्टपदकुम्भानन्विष्याप्यनुपलभ्य विश्रृङ्खलमब्रोचत् गृहाणेदं जीर्णं स्वभवनं मे देहि देहि मे निखिलं धनमिति। तस्मिंस्तु तदानाऽऽदाने विवदमाने च राजानमवेदयत्। राजा तु विश्रृंखलात् समाहूतात्तदाकूताकलनेन पूताचारोऽतिरुष्टः कुट्टिलिकोपपतिमपहृत्य सर्वस्वं नगरान्निरवासयत्। विश्रृंखलस्तु सत्यामपि तस्यामसत्यां विज्ञाप्य राजानमन्यामुपयम्य पितृपैतामहवृत्त्या व्यवहरन् संहरन्मनो व्यसनाद्यथासुखमुवास। तदिदमुक्तं धर्मबीजप्ररूढोऽर्थपादपो व्यसनिनमप्युपकरोतीति। सोमशर्मसुविनयौ तदाकर्ण्य सकलं न कलङ्कोचितविधी निधी सुकृतस्यप्रहर्षोत्फुल्ल वदनौ वद नौ हितमन्यदपीति वदन्तौ वरदं तौ बलिमुनिमभिनन्द्य ननन्दतुः।

इति श्रीदीक्षितचक्रपाणिविरचिते
दशकुमारशेषे चतुर्थ उच्छ्वासः

# पंचमोच्छ्वासः

अथैतदाकर्ण्य सस्मिताननो राजवाहनो विचित्रबहुचरित्राणां निजमित्राणां जन्मान्तरकथाः शुश्रूषुर्मुनिमुखनिहितदृष्टिरतिष्ठत् । अचिन्त्यज्ञाननिधिः स तपोनिधिः तु तथाविधं तमवलोक्य तन्मित्रचित्रजन्मान्तरकथाख्यकथिषु विहितबहुविचित्रकर्मण्यपहारवर्मणि निहितदृष्टिः प्रथममाचष्ट । राजाधिराजनन्दन राजवाहन पुरा किल भगवन्निवासे कैलाशे शिवभक्तिमहोत्सवप्रसंगेन प्रवृत्ते नृत्ते पश्यत्सु सत्सु समागतेषु कृतनतिषूपविष्टेषु त्रिभुवनवरिष्ठेषु पुरन्दरप्रभृतिषु लोकपालेषु विचित्रबहुचरित्रो वसुमित्रो नाम विद्याधरो गङ्गाधरोपवीणनविषयेण नन्दनवनविहरणसहचरीं सुरभिदत्तां मत्तान्तरं नृत्यंतीं सरसमत्सरसमवलोक्य मन्मथाविष्टोऽशिष्टोचिततालविकलः सगद्गदमुज्जगौ । सुरभिदत्तापि मदनमत्ता गायन्तमतिरम्यं सायन्तनस्वरं समायान्तमवलोकयन्ती करोत्क्षेपणमिषेणाकृष्यालिङ्गन्तीव प्रहृष्टाकृष्टा कामेन स्खलद्गतिर्ननर्त । ततः स्वरभंगसंगगतिवैकल्यं च समीक्ष्यानयोरनयोपगूढयोर्मदनमूढयोर्मानसं विकारमधिगतवत्या भगवत्या तद्धेतुं पृष्टौ नातिहृष्टौ तावभाषाप—

कान्तया कः किलापूर्णतुङ्गस्तनतटान्तया ।
लावण्याम्बुतरङ्गिण्या हृतः स्यादात्मनः प्रभुः ॥१॥

सुरूपपुरुषालोकहृतसर्वस्वधैर्यया ।
कान्तया स्वस्थया देवि भूयते मदनार्तया ॥२॥

इति यथाक्रममूचतुः

अथ यथार्थकथनपरितुष्टापि रुष्टा तयोरवसरासहतया विविध शापवर्णी शशाप । गच्छतं युवां मुनिवाञ्छितमदनसुखौ

बहुशोकमितो मनुजलोकमनुचितमाचरन्ताविह सदधीति । तत-
स्तन्मन्तुमार्जनाय प्रणिपतन्तीमतीवमतीव सतीं विगतमलां विमलां
नाम तस्य गृहपत्नीमिदमुवाच-त्वमप्यवतर कातरहृदये हृदयेश्वरेण
वियोगमसहमाना सहानेन । तत्र चाभूतपूर्वरिपुभयकम्पायां च-
म्पायां पुरि वसन्ती भवन्ती बलाद्दुद्रीढुरन्यस्य शूरम्मन्यस्य मरण
हेतुः सहेतुकं तत्र वसतः सतोऽस्य पाणिगृहीती सती चिरं रंस्य
से । इयं तु पाणिगृहीता नीता रागविशेषं कामेन वामेनानेन पूर्वसंग
ताङ्गी सुखायमानानन्तरं विमनायिष्यत इति वसुमित्रः पुनरवतर
भवनीमपनीतपूर्ववेषः संकुचन्मनाः शरजन्मना समादिदिशे ।
मित्र ! वसुमित्र ! मित्रजनसुखचरित्र ! मा विषीदावतर महीमही
नवीर्यो मदनुग्रहान्निग्रहानुग्रहसमर्थो भवान् भविता । भवता चा-
वतीर्णेन स्तेनीभवता वसता चम्पायामसतां ततोऽधिकतरं धना
पहारपीडानुभूतये धनिनां धनानि हरणीयानि । ते हि पूर्वजन्म-
न्यैकागारिकाः कारिकाः कारंकारमपहृत्य परधनानि सन्निहिता
स्मठाः शठा विभेजिरे । आपूरणीयश्च तैरेव धनैस्तत्रैव लब्धजन्मा
नाम्ना धनमित्रो मित्रीभूय । स हि पूर्वजनो जनौघं विहाय मत्म
ठालयः कठाध्यापकः सत्यापको नाम कामतो मामपूपुजदिति ।
स किलायमपहारवर्माद्भुतकर्मा तथाहृतैर्धनैर्धनमित्रमापूर्य राग-
मञ्जरीञ्चानुगृह्य विनतमानं बलान् कामयमानमश्वालिकामुग्रक-
र्माणं चण्डवर्माणं निहत्येमामुद्वहन्वञ्चयन्न चर्मभस्त्रिकया कृता
निस्तर्यानिहत्या मतिमान कामसंजरीम् । सा हि पूर्वस्मिन्नपि ज-
नुषि विगतातङ्कायां चम्पायामस्यां वसतः सतः शस्य कस्यचिद्धनि
कस्यासीत् कुमारी मरीचिका नाम मारीव च पौरवपोतानपहरन्ती
विहरन्ती विष्या शिष्या कस्याश्चिद्दैवहतायाः पत्या त्यक्ता व्यक्ता
कर्मणा पौरभयाद्भूतकम्पा चम्पामपहाय पम्पासरस्तटोपकंठे कंठे
कालमठालया शठा कठालयेषु भिक्षामटन्ती पठन्ती गाथामनाथा

चारुदारुवृत्ताद्धकर्णिका वर्णिका साधुभावानां शंखचक्रधारिणी
दारुमालभारिणी शमीलोपलिप्तकाया मायाविनी विनीतवेषा
सर्वेषामुपजनयन्ती विश्वासमलाबूभाण्डा दाण्डाजिनिका न्य-
वसत्।

अथैकदा पारिपन्थिकप्रचारविकटपथाद्विमार्गपथादुपगत
मपथकं पथिक कृतसंविद वेदविद कोविद नाम प्रचरन्ती चरन्ती
शाठ्यं काचिदाकर्ण्य सकलसर्वतृष्णेन विचार्य तामुना विश्वास-
तेन न्यसनायार्थस्य पृष्टा दृष्टापि दृष्टार्थेव भवन्ती नवनीपव-
नीमर्नोडे नीडजोपजुष्टां विशालसकलशालवनीमुपदिदेश। स
तु तदुमतः कस्याचिच्चलदलस्योपमूलं विन्यस्य धनं गत्वा प्रतिनि-
वृत्तोऽन्विष्यापि तत्र तदनुपलभ्य विहृते विनष्टे च तया पृष्टया
तदेकविश्वासभाजनैः पौरजनैश्चात्रणीयो ह्रीमान् निगम्य क्वचिदेका-
न्ते वनान्ते क्लान्तो नितान्तमरोदीत्। अथ दैवात्तदेवागत्य कश्चि
त्कलासु कुशलः कुशलो नाम्नापि साम्ना तमाश्वास्य तद्धेतुमपृ-
च्छत्। अथासावादितस्तमाख्यत। स तु तदुक्तं सकलमाकर्ण्य
किञ्चिद् विमृश्य तमवोचत्। मयि सह तया हतया रहसि मन्त्र-
यमाणे भवता भवताऽपूर्वेणोपस्थेयमिति। तथा च तमुपदिश्य
विधाय चालीकाभिधानकुम्भांस्तदाश्रमोपकण्ठे सभृत्यो न्यवसत्।
अथ रहस्यासीनया कपटपीनया तया सहार्थन्यसनाय मन्त्रय-
माणे तस्मिन् कपटकोविदे विदेशपटौ कृतसंविदा वेदविदा तेनो
पस्थायि। तया तु प्रभूतधनावलोकसहर्षया सामर्षयापि कुशलाति
विश्वासाय किं नाददासि चूतपोतकोपमूलात्तूलाविलात्तदात्मधन-
मिति सोऽभ्यधायि। स तु तदुक्तसंदेशप्रदेशात्तदधिगत्य तुष्टोऽपि
रुष्टोऽतिदुष्टतयानुभूतया भूतया तस्यास्तामशपत। अयि दुष्टे
जुष्टे लोभेन पापपरिपुष्टे भविष्यस्यपरजनावापि तथा दरिद्राने-
द्राक्छेदवती यथा स्मरिष्यसि निजं पापमिति। अथ सा शप्ता

संतप्ता महर्षेस्तिथिनयोस्तयोर्विलसता धूर्ताश्च धूर्ता जनैर्व्यक्तीभूतत्वा
भूतकर्मा विभर्त्ता नित्यमशर्मा प्रत्येहापि जन्मनि वञ्चनानेन कु-
शलेनापहारवर्मणाऽसमन्तकशेषा। विशेषान्मुनिमरीचिवञ्चनदुरित-
जनितमनुभवति 'दुःखम्। दुःखाकरोति नियतं महदपकारो निकृ-
तारम्।' स विप्रः कुशलो नामापि कोविदोपकारबलादिह जन्मनि
हृतमवरस्वोऽपि तया विरूपकः स्वं धनमलभत। उपहारवर्मा तु
विलोडनमसहमानया वियद्गङ्गया मर्त्यत्वमेहीति शप्तस्य गणेश
स्यांशः प्रतिशप्तया कल्पसुन्दरीरूपेणावतीर्णया तया सह संगतो
यथा तथा कथितमेवानेन।

पुष्पोद्भवसोमदत्तौ तु निरस्तदैत्यदानवामर्षस्य दानव-
शिल्पिनो मयस्य मनुजभावमुपगतौ सुकलनिकलाभिधौ सुतौ
विद्धि। तौ हि दण्डपादुकाकमण्डलुविभागाय समाविवस्थे पितरि
विवदमानौ साभिमानौ सुबुद्धिनाम्ना विप्रयूना नानपहृत्य तौ
वञ्चितौ विधेयौ कोपस्यानालोचितविधेयौ जाताभिषङ्गौ विहत-
पितृसमाधिभङ्गौ कुपितेन पित्रानन्यसुलभद्रव्यरत्नापहारेऽस्त्रजात-
शोकशल्यौ सुशल्यौ यथा जातौ भवन्तौ भवतां मनुजाविति शप्तौ
बभूवतुः। अथ शापसंतप्तौ प्रणतौ तौ पुनरुक्तौ मुक्तौ प्रयतमाने-
न पुरुषोत्तमचरणनिहितकरणेन पित्रैव शापावनारभ्य राज-
वाहनस्य हितकारिण्या परिचर्यया निस्तीर्यापदं स्वपदं प्रतिप-
त्स्यमहिमानौ सम्भवाप्स्यथ इति। राजवाहनस्तु कोऽसौ द्विज
सूनुः कथं चापहृतवान् किं गुणाश्चाभवन् दण्डपादुकाकमण्डल-
व इति मुनिमपृच्छत्। मुनिस्तु महतीयं कथा यथाऽवतरति च
विवस्वानपश्चिमेनेति मनसि कृत्य संक्षिप्य कथामब्रवीत्। स्वस्ति
अस्ति किल कावेरीतटे शंकरेशमठकलिते ललितेष्टकचितरचित-
भवनभासुरं भासुरस्यमणिचित्रगोपुरं गोपुरं नाम नगरं नगराङ्ग
चोपशल्यपथे कृष्णकथेऽनपवित्रेण विबुधसुरेन सोऽन्यतो जना यत्र

तत्र सततमतः पापात् पुण्यमग्यकर्मणः सुमतिशर्मणो द्विजस्य प्रिय
तिसृभ्यः स्त्रः शीलाः सुशीला धन्यकाः कन्यकाः समभवन् । पित्रा
पालिता लालिताः किल ताः कलिताङ्गतारुण्यं तारुण्यं प्रतिपेदिरे।
कदाचित्ताश्चित्ताहितोद्वाहविषयां निधयो गुणानां गुणानाधिकान्
गायन्त्यो विमलानमलातिपीतवसनसंवीतचारुकुचाकुचा तुलितना-
गपुताः स्तनाः समतोभिसतोभिरामतरलालिताः करकलिताचन्पु-
ष्पगोचनाऽमत्राः सत्रासचपलमृगनेत्रा वेत्रालिशालितीरदेशां न
सन्देशां वेश्मनः स्नातुं कावेरीं कामदां प्रतिप्रययुः । ततस्ताः सम
स्ताः स्त्रीकर्माणि सुनिष्णाताः स्नाताः पाथसि पवित्रे सवित्रेऽर्घ
प्रदाय प्रदाय चालके रोचनं विरोचनं नमस्कृत्य कृत्यनुकूलकूलतीर्थं
तीर्थं च प्रणम्य मम्यगच्छ गच्छन्त्यः सदनं सदनन्तच्छविवदन
नमयन्त्यः कमत्यन्त्यमत्य स्तनयत्रणानमिता नमितापराङ्गनाननक
मलाः कमलालिविमलकमलकन्दपूर्णपात्रसनाथवामहस्ताः प्रशस्ता
परहस्तात्तनासरसाः मरमाऽलकोत्सारितावगुण्ठनपटा वटाधः
समुपविष्टेन तपोपविष्टेन परित्यक्तविषयप्रसंगेन गतगेन पिपा-
सुना पिपासुनातिदूरमाश्रमं श्रमं गतेन मुनिना सुनिनादमाहूताः
पूताः स्तुस्त्रीमुपानीय पानीयमयाचयन्त । प्रणतासु तासु च द्विजसु
तासु समधिकशीलां सुशीलां नीलाम्बुजनयनां प्रदाय पानीयमानीय
पानीयपात्रात्कलितपयविशमङ्गानपि सान्त्वयन्तीं विनयन्तीं परितुष्टः
सर्वज्ञो मुनिरभाषत ।

वत्से ! वत्सले समधिकशीले सुशीले शीलेन
महितबुद्धिः सुबुद्धिर्नामतोऽर्थतोऽपि तोषितार्थिजनो मनोहरवपुः
कनकनिष्ठीवी विविधादिव्यमाचयुतस्ते सुतो भविता । तेनैव पुत्र-
वत्यो धनवत्यः परस्परप्रीतिमत्यश्च सत्यो यूयं यातस्तन्मातरो
भूत्वा सुखयथेति सथोक्तास्तु ताः स्तुतात्मभागधेया विधेयाश्रहिता
हिताय विहितमुनिमानना समाननाः परस्परमुदीक्षमाणा हर्षमा-

ताः संगता गृहं गता विहसन्त्यः किं हसथेति मातृभिः पृष्टा हृष्टाः सव्रीडस्मितरचनं तथा मुनेर्वचनं सहासकारणं विवव्रुः। ताभिश्च संगताभिः पत्ये सत्ये कान्ते कथितम्। सहर्षमतिः पतिस्तु विजितामरपुरब्रह्मपुरवासिनो ब्रह्मदत्तस्य श्रुतिधरतपोधरयज्ञधरेभ्यो विख्यातनियेभ्यस्तनयेभ्यो यथायथं ताः प्रददौ। कृतपरिणया स्तु ते स्तुतेतरविषयचरित्राः पवित्राः पवित्रासवारणसमर्थाः मदन-पुमर्थासक्तचेतसः प्रवयसः सुलभसकलसुखमुखं सुरतसुखं सरति कलहं कलहमगनानामनुबभूवुः। अथ ते दैवादधिगत्य दैन्यं वैरस्यं पृथु स्मरन्तोऽसंतोषवशात् पितुरन्तेवासिभिः समं समंततो धनार्जनाय प्रातिष्ठन्त। गर्भवत्यां सुशीलायां समजनि च पुत्रो मुनिवचनात्तथाविधः। सुशीलायाः समवर्ध्यत च तन्निष्ठीवनघटितवृत्तिभिः परस्परप्रीतिमतीभिः सतीभिस्ताभिरसौ। अथ यौवनमुपगते मातृवत्सले तस्मिन्पितरो लब्धभूरिधना अपि धनायाक्रान्तचेतसो नगरीनागरपरिहीनाः कदर्याः संव्यवतन्त। गृहागतानां चार्थिनां निरति धनवति धनसानिमतिमतिसतितमति सति न सुमतिरजनि। भवति न कथमपि गतिमति सति पथि सति सति रतिरसताम्। स खलु जनकमतिमतिगतिमतिरतिमतिमतिरवगतवान्। तदनु मनुजकुलकलकलविरहितं घनवनमभिगतवान्। अथ वनं गाहमानोऽसहमानो वैमत्यमाश्रमे कस्यचिन्महर्षेः सहर्षेरितं श्लोकमिमं शुश्राव—

अन्धस्येवास्य लोकस्य फलभूमिः स्वकर्मभिः।
पुरोगैर्नीयमानस्य हेतुमात्रं स्वपौरुषम्॥

तदर्थमालोचयन्नेवाध्वन्योऽग्रतो मानमदमानौ बलसमानौ कलहायमानौ मयसुतावलोक्य सविनयं कौ युवां किं चेह कलहकारणमिति कलहवारणमाचरन्नपृच्छत्। तौ तु समुत्पन्नस्मात्मनोऽभिधाय विनाय च कोपसंकोचं दण्डपादुकाकमण्डलूनां जनकधनानां

विभागो न घटते इति य एवानयोर्बलूलः स नांशक इति व्यवस्था
दय युध्यमानौ स्वो न चानयोर्हीयते धनक इति तमूचतुः । स तु
पुनर्दण्डादिगुणानपृच्छत् । तावपि समस्तागारिभाग्यं दण्डस्य
समस्ताभिलाषविषयार्थसंपादनम् । मंडलोः समस्तविष्टपाठ्याहत
गतिसाधनं पादुकयोर्गुणमूचतुः । स तु विहस्य यद्येवं किमनेन
शरीरक्षयकरणेन रणेन, किं तु मयि पश्यति धावतामेवोभौ निः
क्षोभौ धावतोर्युवयोर्य एव वीर्याधिकः स एतानादद्यादित्यवदत् ।
ततस्तथेत्यभ्युपेत्यान्योन्यविजिगीषयाऽतिवेगेन धावतोरिषुशाङ्क-
टान्तरितयोर्दूरनिर्गतयोस्तयोः सुबुद्धिरधिरुह्य पादुके कराभ्यां
दण्डकमंडलू चोपादाय गगनतलमुदपतत् । उत्पत्य च 'बंधनप्रवणा
वैश्याः क्षत्रियाः साहसप्रियाः वणिजो धनलुब्धाश्च द्विजा मतिप-
नरा यथा' अतोऽहं कस्य गेहे निवसामीति विचिन्त्य प्रस्थलायाः
पुरः कस्मिंश्चिच्छून्यवेश्मनि गगनादवततार । तत्र चालक्षितो निवस-
न्नेकदैकां पलिक्नीं स्त्रियमपश्यत् अपृच्छच्च भिनध पुनः पुनरव
लोकयन्तीं विचिन्तयन्तीमिव किञ्चिद् विस्मेराननामगामयि मा
तः ! किं पुनः पुनरवलोकयसि मामिति सा त्ववादीत् ।
पुत्र ! पुरोऽस्याः पत्युर्महासेनस्य भूपतेर्गुणलावण्यशीवशीकृ-
तानेकतरुणचित्ता वित्ता गुणैः कनकवती नाम कन्यकासीत् चकाशित
सा रूपसंपदाभिभूय त्रिभुवनसुन्दरीः सुन्दरी कुन्दरीतिधरदशना-
याः समनुरूपमस्यास्तवैव रूपमिति पुनः पुनर्विलोकयामि चिन्त-
यामि च निश्चितविधिविहितपरमरूपयोरनुरूपयोरुभयोर्भवेत् कथ
मपि समागम इति संभावयामि चामुना सुनासीरसमरय तवाधुना
प्रस्थलागमनेन तदुपपत्स्यते, यतः—

असाध्यं साधयत्यर्थं हेलयाभिमुखो विधिः ।
विमुखः साध्यमुत्साद्य विपरीतं प्रयच्छति ॥१॥

तथाहि इह खलु पुरा पुरारिसमोऽस्य राज्ञः पितामहो म-

होग्रसेनो नाम कन्याकामः कामदेवेन प्रियम्वदेन नाम्ना महोपचा-
रपरितुष्टेन मुनिनाऽवाचि-जनिष्यते रत्नमती नाम कन्यका ।
सा चैकान्तिका प्रच्छन्नं प्रकाशं वा यमभिलषेत् स दानीय इति स-
मजनि च कन्या तरुणीभूता च सा भिक्षामटन्तं पटं तंतुविहीन-
मधिवसानं रूपमात्रपरमसारं कमपि विप्रकुमारमवलोक्य सखी-
मुखेन विनिवेद्य स्वानुरागमस्मिन्नेव वेश्मनि निशि संगमाय सम
निष्ठिपत् । स तु विप्रस्ताच्चपलस्वभावः कुत्रचिद्विवाहोत्सवं समा-
कर्ण्य किं वृथा कालं नयामि यास्यामि ततः किंचिदिति वि
चिन्त्यानवगीतगीतरवेणानुमाय तदा तदालयमभिजगाम । तत्र
च जनेऽखिले कार्याकुले प्रसरति चानिवेलं कोलाहले प्रार्थयमा-
नोऽप्यलब्धदक्षिणोऽनतिदक्षिणां दक्षिणाशया च विलम्बितः प्रवृत्ते
च निशीथे पुनरागन्तुमक्षमस्तत्रैव कचित्कक्षकरिले कायच्छिन्नवरे
चत्वरे शयानोऽनुचिन्तयत् इहागतेन हि मया लोभान्धेनातियाच
ता विमानना परं प्राप्ता न तु सा राजकन्येति । इतश्च प्रचलित
एव तस्मिन्कश्चिदेत्य राजकुमारः कुमारविक्रमो नाम परैरवकृष्टः
पितृसुहृदो महाग्रसेनाद्दण्डावग्रहमादित्सुरविज्ञः श्रान्तोऽत्र सु-
ष्वाप । राजकन्या तूपनीतकामसाधनोपेत्य ततोऽतिभासमानमे-
नमवलोक्यातिहृष्टा पृष्टान्वया च संभाव्य हारकाञ्चिनूपुररणी
महानेन विजहार । राजापि प्रातर्विज्ञाततथाविधवृत्तान्तो विख्या
तकुलशीलाचाराय राजकुमाराय सहर्षं तां प्रादात । विप्रकुमारस्तु
प्रातरागत्य श्रुततथाविधराजकुमारवार्तो दुःखार्तो नितरां कथित-
निजकथो ह्रीणो जनैरवकीर्णोऽप्रवीणो नगरान्निरगात् इति । तत-
स्तद्वचनाकर्णनमार्गेणैव प्रविष्टो बलविशिष्टो मदनो विप्रयूनः
समुपस्थितमपि राजकुमारीसंगमं विघटयतो राजकुमारस्यानुपस्थि
तमपि तं विधेर्बलवत्तां विचिन्तयन्तं विशुद्धबुद्धिं सुबुद्धिं कनकव-
ल्लीसंगमाय समचूचुरत् । ततः समधिरुह्य पादुके दण्डकमण्डलूल्ल

मितकरो लसन्मणिप्रदीपनिर्मलप्रभापुंजभासुरं कनकवतीभवनमु
पेत्य जगद्विजयपरिश्रान्तां स्वपतीं मूर्तां कामशक्तिमिव तामवलो-
क्य कथमेतां प्रबोधयाम्यदत्तसंकेतां कदाचिदियं निहन्यान्मे मनोर
थमिति यावदचिन्तयत्तावद्धार्मिकगीयमानामिमामार्यामश्रृणोत्—

आलिंग्य मधुरहुंकृतिमलसोन्मिषदीक्षणां रहः कान्ताम् ।
यद् बोधयन्ति सुप्तां जन्मनि यूनां तदेव फलम् ॥

इति समाकर्ण्य स्वपतीं स्वप्ने तमेव पश्यन्तीं कनकवतीं भयलज्जा
मन्थरेण करेण प्राबोधयत् । सा च प्रबुद्धा शुद्धा संजातस्वप्नप्रत्य
भिज्ञा सुखायमानोत्थायादरेणाभ्युत्थ तमवोचत्—आर्यपुत्र !
पितृश्रूयमाणात् पुराणादखिलाभिलाषसाधनं भास्कराराधनं स-
माकर्ण्यामोघसंकल्पं देवकल्पं पतिमभिलषन्ती व्यपगतमलै रक्तकम
लैर्भगवन्तं विवस्वन्तमनुदिनमर्चयन्ती समर्चयन्ती च स्तवैर्नवैरह-
मस्यामेव समतीतायां निशि स्वप्ने व्यपगतकोकशोकशल्ये कल्ये
विष्वगेव प्रसरमुदयगिरिशिखरमन्तरानन्तरापवशादुत्पन्नानन
पारिजातकाननमपश्यम् । तत्र च लब्धपुरुहूतहर्म्यसाधर्म्यं स्फटि-
कमणिहर्म्यं निर्धूतचित्तचिन्तामयं मुक्तामय शिवलिंगमर्चयन्तं
रूपविजितमारं सुकुमारं कमपि द्विजकुमारमद्राक्षम् । मन्मनश्च
तं चकमे । ततोऽकान्ते किञ्चिद्दूरविदूरहमुच्चरन्तं वागतां वलितदृष्टि-
सृष्टिमिव सन्वतीं कान्तिनिर्झराणामेवां वनितां नितान्तगौरीं गौ
रीमिव मनीषामिव परूपशालिनीमपश्यम् । दाक्षिणातो निसृष्ट-
दृष्टिराकृष्टिमिव चेतसस्तन्वान मार्तण्डमिवापूर्वरूपशालिनं पुरु
षमेकमवालोकयम् । ततस्ताभिवन्द्य पारिजातकुसुमैर्भगवन्तं भव
मर्चयन्त्या विचिन्तयन्त्या: किमपि मम समुत्थाय तौ समुचित-
मनयोरनुरूपयोर्दाम्पत्यमित्यभिधाय तेन द्विजसुतेन पाणिमग्राह-
येताम् । अहं तु प्रबुद्धोत्थायोदयगिरिशिखरशालिनमंशुमालिनमभि-
वन्द्य विस्मितप्रहृष्टचित्तवृत्तिस्तमेव स्वप्नं सह सखीभिः विचार

यन्ती दिनमनैषम् । अद्य पुनः स्वपती स्वप्ने भवन्तमेव पश्यन्ती बोधितेति । ततस्तदाकर्ण्य विस्मितेन सस्मितेन सरसमधुरचेष्टितैर्मन्दहासमपनयता नयताङ्कं जनयता मुदमुन्नयतामाननं नमयता वदनं परिहासैर्मदनकदनासहा सहानेन विजहार । ततोऽन्तर्वंशिकैः कनकवतीसंभोगचिह्नमावेदयितो राजा तदुदन्ताधिगमाय रहः समुपदिश्यैकां नारीमन्तःपुरायादिशत् । सापि रजन्यामजानतः सुबुद्धवर्णिनः प्रच्छन्नमलक्तकाङ्कं विधाय राजानं तदावेदयत् । राजा तु चारविदिततदभिज्ञातचिह्नेनाहूतः कलिताकूतः समधिरूढपादुके समुपात्तदण्डकमंडलुः कनकवतीमुपेत्य विज्ञा तौ श्वो गच्छावोऽधुनेत्यभिधायं निधाय तामङ्के गगनमुदपतत् । ततः कनकवतीच्छयोपगङ्गमङ्गेषु कमंडलुबलात् कुसुमपुरं नामपुरं पुरन्दरनगरसमं विधाय विहृत्य च तत्र चिरकालमिदानीं देवदानवगन्धर्वविद्याधरनगरेषु यथेच्छं विहरतीत्यभिधाय मुनिरहो कथारसप्रसङ्गेन समतिक्रान्तोऽस्मि प्रस्तुतकथाप्रसंगमिति वदन् सिष्मिये। ततो मित्रगुप्तमन्त्रगुप्तप्रमतिविश्रुतानवेक्ष्य मुनिः पुनराचष्ट—राजकुमार कुमारपितृराजापकरणायुताः श्रुतायुगन्धर्वसुताः समधिरूढरथाः सुरथमहारथातिरथतुरंगरथाः समुपवीक्ष्य शंकरं विरंजयिषवः स्वांशैर्निहितवीणाः प्रवीणाः समतिक्रम्यालकामलकाभिरामा रामाः कामावेशवतीः सतीः स्वाः पश्यन्तः शिवालयोपकण्ठमुपययुः ।

तत्र च मनोहरकुसुमपटलललितलवलीलवङ्गलताप्रतानसंतानसुभगपरिसरमुपकूलरूढसहकारवनसपुन्नागकुञ्ज-पुञ्जरमणीयं रमणीमणीनिकराकरणजालविविधरागहृभागतटं विमलशीतलसलिलं सरो ददर्श दर्शं विकचविमलकमलमधुपानमत्तकलहंसललितविरुतानि प्रहृष्टप्रमदचक्रवाकसञ्चालसविरामाभिरामकामरागबद्धनाविरावान् सुरभिरसभारमधुरसारकादम्बकपटलकट-

कूजितानि विकसितमालतीलताकुसुमनिकरपरिभ्रमद्भ्रमरमाला-
तझङ्कारान् विकचेन्दीवरतामरसकेलिसरससारसकारण्डवचक्रवा
कसंमर्दातिमधुरविरुतानि च श्रावं श्रावं समुल्लसन्मदना वसना-
धिरूढमदरागा रागाकुलाकुलाभिरामगामा विभ्रमवमना दमनाय
न शक्ता: करणानां विगमविमर्षकलना ललनाकटाक्षदृष्टा अदृ-
ष्टात्मविधेया विधेया मदनस्य मधुमत्ता मत्तालिगीतिमनुसरन्त:
कूजद्विहगपुञ्जेषु निकुञ्जेषूपविश्य ललनास्यनिहितनयना नयनायका
अपि विस्मृतनयास्तनया गन्धर्वपते: सविशेषग्रामगानग्रामिणीभि
र्भासुराभरणमणीभि: समं रमणीभिस्तेन कलमुज्जगु: । इत्थं
च प्रवृत्ते रागावेशपेशले मदनाद्वैतवादकौशले विहसद्वदना वद-
नायिके किमिदमतिमधुरमिति सामिस्मरः सशिरःकम्पं कं पंकज
नयनेऽनुमोदसे स्वरविशेषमिति वदन्तो दन्तोज्ज्वलकिरणभूषित-
दशनवाससस्तारसारपरमहारहृभगवुचभारभरसमानाहितपाणय:-

शुचितरमौक्तिकहारस्फुटगणापूरपूजितयो: ।
उचितं पूजनमनयो: स्तनयोर्भवगोश्च शंभवयो: ।

इति पठन्तो हृष्यन्तश्च तावेव पूजोपकरणेन परिपूज्योपवीणयाञ्च
क्रु: अवहेलयाश्चक्रुश्च स्नातं सरसि तपसि निष्णातं द्विषन्तमङ्ग-
जं मुनिं मतङ्गजं नाम सामगायन्तमायन्तमनभिवादयन्त: जह-
सुश्च कामिजनविरुद्धवृषमेनमेनसोपहता हताचारा मोहमदेन
मदनेन ।

अथ प्रभविष्णुनापि सहिष्णुनाऽमुना मुनिना सोढापरा-
धानपि तदन्तेवासी गुरुकुलवासी सामगनामा समागतस्तदनु तद
नुसारी पारीणः सर्वविद्यानां तथाविहितविहारान सदारान गन्ध
र्वकुमारानशपत् मर्त्यभावाय तेऽपीशंकराराधनयात्राजन्यपुण्यव-
शात् खचराश्चक्रवर्तिनश्च ते सहचराः समपद्यन्त । विधूतपापाश्चैते

समुत्तीर्णो यन्शापाः पुनः स्वां गतिं प्रतिपत्स्यन्त इति । अथार्थ-पालनिहितदृष्टिः स मुनिराचष्ट—

पुरा किल महेन्द्रसदनप्रथिते सञ्चलद्वाहने नरवाहने मथुरायामूर्ध्वमुख तपस्यतो मुनेरगस्त्यस्योपरि पश्यतो यक्षस्य नाम्ना सुमुखस्य दुर्मतिनिशाचरो निरष्ठीवत् । तदनीहमानोऽपि मानोपहितमतिस्तत्कर्मावलोकनेन सस्मितमुखः समुत्तस्थौ । ततः सागर इवासंक्षोभ्योऽपि तत्कर्मधर्षितोऽमर्षितो मुनिरविनीतविनय हेतुतया शापस्यांशे रेवमशपत् । पापा ! मम शापाद्धिगततापा मनोहता हता मनुजेन स्वलोकच्युता भवतेति । सुमुखस्तु प्रसादय-न्नवाचि तपोधनेन । त्वं किलोत्पद्य मनुजेष्वनवाप्य पुरुषात्पुंसः पुन रुत्पद्य भावि चक्रवर्तिनो राजवाहनस्य परिचर्यया विधूय पापं प्रेत्य पुनः स्वां गतिं प्रतिपत्स्यस इति । नरवाहनस्तु तथाविधं शा-पमाकर्ण्य निर्भर्त्स्य दुर्मतिं शापान्मुनेर्गन्धमादने गिरौ वासमरोच यत् । ततोऽतीते कियत्येव काले बालेन धृतराष्ट्रस्य दुरोदरापहृत सर्वस्वस्तीर्थाटनप्रसङ्गेन लोमशोपदिष्टवर्त्मा विदिततत्कर्मा धर्मात्म-जः सानुजो गन्धमादनोपत्यकामाससाद । तत्र च गन्धमादनोप-वनसंभवमतिविचित्रवर्णभासुरं कुसुममत्यपरकुसुमसुरभिनिम्नगा-पूरपातवशादुपागतमादायाघ्राय च्यातिहृष्टया तया तथाविधापर कुसुमलाभजाततृष्णया कृष्णया नियुक्तो भीमसेनो गन्धमादनम-धिरूढोऽनुजः स नयश्च्युतकान्तरपथोऽव्यथो हनूमतोपदिष्टवर्त्मा नरवाहनोपवनमधिगम्य रम्यकुसुमानयर्वाचनेोपुरुद्यानपालैः प्रति-षिद्धः क्रुद्धो गदया तान्निजघान । ततः समुद्भूतप्रभूतकोलाहलश्र वणचकितान्निवेदितवृत्तान्तेन नितान्तेनैकपिङ्गेनादिष्टानशिष्टाना साटोपमुद्यदतो गदतो जहि जहीति युध्यमानाननेकानपरानपि सा वेशमानसान् यक्षराक्षसानशीशमत् । समरकोलाहलमाकर्ण्य भीम-सेनमन्विष्यान्यनुपलभ्य समुद्भ्रान्तमानसेन समुनिसमाजेन

धर्मराजेन समरभूमिमागतेनानुनीतो नरवाहनः शापहेतुकं स्वबल
क्षयमवधार्य निवार्य वीरान् समरधीरान् गन्धमादनालयं निज पां
डवेभ्यः समर्प्य कैलाशमगात् । सुमुखस्तु तत्र हतो गतो मनुजलोक
जन्मने शूद्रकावसथे कामपाले आर्यदास्यवस्थायां तारावल्यामु-
त्पाद्य लब्धपरमायुर्विनयवत्याः स्नेहवासनया कान्तिमत्यवस्था-
यां अद्योद्भूदिति । ततोऽमित्रशासनतेजोऽतिमित्रनिजमित्रजन्मा
न्तरकथाश्रवणप्रसन्नाननं राजवाहनं संमीलितनयनः किञ्चिदव
ध्यात्वा मुनिः पुनरवोचत । राजपुत्र पर्वेन्द्रावतो गता विद्याधरस-
माजे राजराजेनादिष्टा सुखोपविष्टा सुरकुञ्जरा नाम सुरसुन्दरी
प्रवृत्ता निजवृत्तान्तप्रसङ्गं वङ्गेषु चम्पायां तव विमोक्षणं चण्डवर्म-
णश्चासुमोक्षणं तथाविधं समाख्यत् । ततो विदितवृत्तान्तेनैक्ष्वाक-
स्य राज्ञो वेगवतः पौत्रेण पुत्रेण मानसवेगस्य वीरशेखरेण नाम्ना
विद्याधरेण निवेदितवृत्तान्तस्तवावन्तिसुन्दरीपरिणयं समस्तभूव
लयप्राप्यराज्यश्रियमतिप्रथप्रबलमित्रबलं च सहायं चण्डवर्मण
स्तु कृताभिसारस्य स्वसमारोपितराज्यभारस्य सपरिवारस्य तथा-
विधं वधं समाकर्ण्य भग्नदर्पो दर्पसारः समचिन्तयद् । किम-
धुना करोमि । यदि प्राप्तराज्येनापि साम्राज्यतृष्णया तपः कर्तु-
मीहमानेन मया चण्डवर्मणि समारोप्यमाणे राज्यभारेऽनुजे की-
र्तिसारे तदधिरोपणमीहमानः कोपितः पिताऽविद्विष्टश्च चण्ड-
वर्मणा कर्मणा तदभिमतेन यथाऽभिवदनुजेऽधुना राज्यभारमारोप-
येत्, विद्विष्टश्च मयावन्तिसुन्दरीवशंवदं राजवाहनमाश्रयेद्
गतं तर्हि राज्येनेयताऽपि राज्यफलकं चेदं तपोऽथ विहाय तपोरा-
ज्याय यतेयापनेयाविस्मितेन सहायसंपदा विनाऽधुना तत्र लभ्य-
मथ निस्पृहस्तपश्चरेयं दिलीपनलनहुषाम्बरीषराज्यवद्ध्रुवस्पृहस्य क-
थमद्य भवति निस्पृहता । हा हताशोऽहं तपस्यति । ततस्तदागत्य
श्रमद्य भवति निस्पृहता
शृगालब्धभद्रेण मणिभद्रेण यक्षेणार्थमबोधि । मानसारनन्दन

दर्पसारपक्षः सतां यशोहं यथाधिपतिश्चिन्तापन्नमानसं मानसं त्वां सन्मुखेनेत्थमादिशति—यदुप्रभृतयो हि पुराऽऽतुराक्रान्तस्य पितुराक्रोशनादेव प्राज्यं राज्यं नासेदुः । किं बहुनार्भकोऽपि कोपितो महापकाराय भवति । तथाहि—

पुरा किल पुरारिपुरे पुरारिपूजनपरस्य विष्णुशर्मणो द्वि-जस्य द्वे भार्ये बभूवतुः, तयोः श्रेष्ठा ज्येष्ठा कल्याणी नाम त्रि-हायणं बालकमपहाय परलोकायैष्ययेव प्रावसत् । अपरा प्रिय-म्वदा नाम वसनाशनदाने शरीरसंस्कारे च स्वपुत्रयोरिव सत्पुत्रे नात्याहत । स तु विमानितो विचिकित्समानः पित्रा पृष्टोऽपि कार्श्यकारणं नाचष्ट । एकदा तु रहोलालयस्थाकर्णयत्येव पितरि प्रतिवेशिबालकं कञ्चनावरुध्य विवदमानं किं स्पर्द्धसे सह मया मम द्वौ तातौ स्त इति समतर्जयत् । पित्रा क्रुष्टोऽपि पुनः पुनस्तथैवावोचत् । अथ पिता शंकमानः—

> अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
> वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥

इत्यालोक्यान्तर्मनाः किञ्चिदपि प्रियम्वदां प्रति नावोचत् । विम-नस्कतया तु यथापूर्वं न व्यवजहार । पृष्टोऽपि तया वैमनस्यहे-तुं नाचष्ट । ततो विषीदन्त्यां मातरि रुदन्त्यां नित्यमुपचरन्त्यां निजतनयाभिकमतिविमलमतिः प्रसन्नः किं विषीदसि रोदिषि नित्यमित्यापृच्छ्य मातरं तदुःखहेतुमुपलभ्य यदि व्यवहरसि मातरिह निर्विशेषं यान्यपनयामि ते शोकहेतुमित्यभिधाय समा-नीय बालक तमेवादर्शमवलोकयन्तं पितरमुपेत्यायं मे द्वितीय-स्तात इत्यादर्शमदर्शयत् । विष्णुशर्मा तु तथाभिधाय सहर्षं बाल-कं तमङ्कं निधाय समुदितपरमहर्षः प्रियम्वदायामतिपूर्वां वृत्ति-मन्वतिष्ठत् । तदित्थं सकोपे पोतेऽपि जायते यदि विकारः किम

नितरां संभवति कोपिते महति । तदधुना दर्पमपहाय शान्ति-
साम्भूत्वा सौहार्दं प्रदर्शयन्नवन्तिसुन्दरीपरिग्रहेणास्मास्वनुग्रहं
प्रकटयन् सह कीर्तिसारेणानुजेन पुरस्कृत्यावन्तिसुन्दरीं त्वयोप-
स्थातव्योऽजेयो राजवाहनः । स हि श्रीकृष्णात्मजस्य शाम्बस्या-
वतारो देवदानवगन्धर्वांशसंभूतैरचिन्त्यविक्रमैस्तेजोऽभिजितमित्रैर-
रिमित्रैः सहमित्रैः चिरं पालयिता महीमहीनवीर्यो महेन्द्रोऽपि
पुरा परापहृतराज्यः प्राज्यचिन्तापरः कश्यपोपदेशादैन्द्रपदलाभ-
संजातपरमाह्लादं प्रह्लादमारराध । विघ्नश्च तवायं महर्षिवरशा-
पात् समजनि । त्वया हि पूर्वनिजजन्मनि सुखेणेन वानरेण न
मनोऽच्छोदसरस्तटोपकण्ठमठिकायां विविधकुसुमैर्नानोपहार-
बलिभिर्भगवन्तं भवमर्चयन्तो मुनेः कपिञ्जलस्याहरहः पूजापयो-
गिविविध-कुसुमपातनैरदर्शनीयेन्द्रिय-दर्शनादिभिः कपिहासैश्चानेकै-
स्तपो विघटितम् ।

अथ कुपितेन तेन मुनिना मनुजभावमुपगतस्योपनतपर-
मराज्यस्यापि प्राज्यसाम्राज्यतृष्णया तपश्चरतस्तवान्तरायो भवि-
तेत्यशापीति दर्पसारस्तु तथाविधधनदादेशात्, समुज्झितदर्पः
सह कीर्तिसारेणानुजेनावन्तिसुन्दरीं पुरस्कृत्य जीयाद् वसन्तभानु
वर्षसहस्रमित्याक्रुश्य कपटेन नटेन विश्रुतेन निहतस्य चण्डवर्म-
णः ज्येष्ठेन सहोदरेण चण्डवर्मणा माहिष्मतीराजभार्या दत्ता-
धरनामानं भानुवर्माणमुपजाप्य हृतराज्येन वसन्तभानुना च
समं द्वित्रैरेव दिनैर्भवन्तमुपस्थास्यतीति विगलितविपक्षपक्षः
प्रद्युम्नः सह जयन्तेनानेककोटिग्राममासुरां वज्रनाभासुरभुव-
मिव सहानेन मित्रगणेन सरत्नाकरां भुवमिमां पाहीति । ततः
प्रद्युम्नचरितश्रवणस्पृहयालुमेनमयि वत्स संपत्स्यतेऽवन्तिसुन्द-
रीसनीडे नारदकन्यया गीयमाने महाभारते तच्चरिताधिगम इति
वदन् स्पृशन् दक्षिणकरेण प्रणतमाशास्य सहापहारवर्मप्रभृतिभिः

ससंभ्रमानसं राजवाहनं शिबिरायादिदेश। स तु मुनिवाक्यानि स्मारं स्मारं सविस्मयः शिबिरमुपगतः सह मित्रैस्तास्ताः कथाः कथयंस्तदाश्रमोपकण्ठ एव काञ्चिद् दिवसानानयत्। ततो बन्धविमुक्तसमागतमरालोद्भवपुष्पोद्भवनिवेदिततथाविधदर्पसारागमनवृत्तान्तो मनसा स्मरन् मुनिवचनमादिश्य पुष्पोद्भवं दर्पसारप्रत्युद्गमायापहारवर्मप्रभृतिभिः सेव्यमानः परमासनमधितष्ठौ। ततः प्रतीहारनिवेदितमागतं पुष्पोद्भवपुरस्सरं सकीर्तिसारं दर्पसारमालिङ्गनादिव्यतिकरेण संभाव्य तन्निवेदितं वसन्तभानुं च यथोचितमुपचर्य परमालङ्कारवसनवाहनादिभिरनुगृह्य सर्वान् प्रीतिमतः शिबिराय विससर्ज। अथोत्थाय पूर्वोपरचितशिबिरोपगतां बालचन्द्रिकादिभिरुपासितामवन्तिसुन्दरीमवलोक्य दूरादेव प्रसारितोभयभुजो विकसन्मुखपङ्कजां विरहदुर्बलभुजाभ्यां स्वाननालोकसंमर्दात्पतितां पयोधिवीचीमिव चन्द्रदर्शनोच्छलितां कण्ठग्राहमतिगाढालिङ्गनोद्भूतकम्पमवधूनयन्तीमिव विरहवेदनामामीलिताक्षीं वक्षसि प्रवेष्टुमीहमानामिव न मोक्तुं न गृहीतुमात्मना प्रभवन्तीं राजवाहनप्रविष्टजीवामिव चन्द्रकान्तमयीमिव राजवाहनाननचन्द्रालोकसंभूतप्रभूतसर्वाङ्गीणजलां स्वयमासनेसमुपवेश्य पुनः सुतमुखमवलोकयन्नयनजलं प्रमार्जयन्नङ्गानि परामृशन्नखिलमात्मवृत्तान्तमाख्यातवान्। अथ सहानया वामदेवमभिवन्द्य महीमण्डलाखण्डलः पुष्पपुराय प्रातिष्ठत। ततः समाकर्ण्यावन्तिसुन्दरीमायान्तीमसमान्तीव सम्मदभरेण सदने सदनेकसखीजनसमेता निकेताद्बहिरुपेता प्रीतिमती वसुमती गायन्तीभिः पौरवधूभिः समं समंगलोपकरणहस्ताभिः प्रशस्ताभिः समस्ताभिरामवेषाभिरशेषाभिः पौरकन्याभिरलंकृतपुरोभागा महाभागा शचीसमा समागतां कृतानन्तरणमङ्गलामङ्गलावण्यावधीरितबालचन्द्रिकां बालचन्द्रिकाश्रितपुरोभागामसमानसारमानसार-

जनां कृतादभिपादवन्दनां विलोक्यातिसंमदवशंवदा प्रियंव-
दा दावदा शुभाशिषामनाकुला कुलाचारपूर्वकमुपचचार । तत-
स्तागताभिस्तदीक्षणोन्मुखाभिः सुखातिशयलसन्मुखाभिरन्याभि-
मुखाभिः सहोभयकुलविशुद्धां शुद्धान्तमनैषीत् अमानयच्च समा-
मानभावेन स्वभावेन च सुशीला सहर्षविशेषा निर्विशेषाऽव-
त सदैव दैवपूजासु । राजवाहनस्तु जनकानुमतो विजितानेकस-
मीकैरनीकविशुद्धहार्द्दैः सुहृद्भिश्च समेतो भूयो दिशो विजित्याव-
नीषु दर्पसारं तदनुमत्या वसन्तभानुसंश्रमकेषु सर्वं च मित्रवर्गं
यथायथमभिषिच्य प्राज्यराज्येषु साम्राज्यं प्रपन्नो निर्विशेषमात्म
नो मित्रेषु व्यवहरन्नलभत परां प्रीतिं कीर्तिं च । पालयति च
तस्मिन्नवनिमवनिपतौ कृपादाक्षिण्यसौजन्यविनयमयेऽर्थे विसरति
च दरिद्रशब्दस्यैवार्थसंबन्धो न बभूव । सदाचाररतानां च प्रजा-
नां परलोकादपि भयं नासीत् । सविशेषणानामेव वृत्तिर्न बभूव ।
अवर्णोऽपि वर्णेष्वेव पदमलभत न द्विजादिवर्णेषु । विग्रहोऽपि
समासेषु पदमलभत न जनेषु समासान्त एव सुपन्थानमतिच-
क्राम स्वार्थिकप्रत्ययेष्वेव वचनव्यतिक्रमोऽदृश्यत् । अतिक्रान्तः
परं तिङन्तं निजघान शिष्टानामेव च स्वगणानामिव जनानां
वैशिष्ट्यमासीत् । नञ्समासेऽधर्मोऽसत्यं चादृश्यत । तदेवं
निरस्ताशेषदोषः कृतसमस्तगुणपोषः परिपालितप्रजो रञ्जितभृत्यः
प्रजानामसाध्वतमपनुदन् प्रतिकुर्वन् दैवीर्मानुषीश्चापदः संभावयन्
बुधजनानुद्भावयन् बन्धुजनान्न्यग्भावयन् रिपुजनानुत्सादयन्
कर्मकरान् विप्रानर्चयन् गुरून् प्रणमन् मान्यान् मानयन् सौजन्यं
प्रकटयन् दाक्षिण्यमनुसरन् विनयं वर्द्धयन् राजवाहनो रूपेणा-
प्सरसो जयन्तीं रञ्जयन्तीं मनः स्नेहमेव कमयन्तीं शमयन्तीं खेदं
नित्यं रमयन्तीं दमयन्तीमिवातिसुन्दरीमवन्तिसुन्दरीं रमयन् का-
मतन्त्रनिष्णातैश्चिराभिलषितसुखान्यनुभवन् सुचिरमानन्द

इति श्रीदीक्षितचक्रपाणिविरचिते दशकुमारशेषे
पञ्चम उच्छ्वासः । समाप्तश्चायं ग्रन्थः ।

कृतिरियमचिरोढा भावमेतातिरम्या।
कलितरनिरतीताशेषलेखप्रसादम् ।
जगति जगति यासौ शीलितालोचिता वा
ललितसरसभावा हर्षवर्षं तनोतु ॥

विविधयमकछन्नगद्यपद्यस्फुटतरभावविशेषभावरम्यः ।
ललितपदपदार्थगुम्फितोऽयं जनयतु चेतसि संमदं कवीनाम् ॥

शरदहनेभसुधांशुप्रमितशके वर्णराजिरेषा स्यात् ।
विदुषां प्रीत्यै जाता सोमेश्वरलेखनीमुखतः ॥

अतिशेषापि विशेषा कृतिरेषा चक्रपाणिकवेः ।
गुणसहिता हृदि निहिता सतां हितायापि सन्निहिता ॥

कमनीयचक्रपाणेः पदचक्रं यस्य सन्मुखे लग्नम् ।
महनीयं विबुधानामिह तं मन्ये जघन्यमपि ॥